# शुद्धिविवेकस्थविषयानुक्रमणिका प्रारभ्यते ।

॥ इति शुद्धिविवेकस्थवियानुक्रमणिका समाप्ता ॥

श्रीगणेशायनमः॥हरतुदुरितजातंकेशवस्यैकबाहुर्विपुलगलबिलांतःकेशिनःसंप्रविष्टः॥ असुपवनमिवास्यप्राशितुंसंप्रवृत्तः कुवलयदल
नीलःपंचशीर्षोभुजंगः ॥ १ ॥ चिरंतनानेकनिबंधसिद्धःसुसंप्रदायानुगतःस्फुटार्थः ॥ नत्वाहरिंरुद्रधरेणसम्यग्वितन्यतेशुद्धिविवेक
एषः॥२॥ संत्येवरत्नाकरपारिजातमिताक्षराहारलतादयोऽन्ये ॥ तथापितत्रालसमानसानांभवेत्प्रमोदायममप्रयासः ॥३ ॥ शुद्धिस्ता
वदखिलविहितकर्माधिकारापादकोधर्मविशेषः।अशुद्धिस्तुतद्विरोधीधर्मविशेषएवसपिंडजन्मादिनिमित्तकः ।तदत्राशुद्धिविगमकथनेन
समयकथनेनप्रशुद्धिर्विविच्यते। तत्रसपिंडजन्मादिश्चज्ञातोशुद्धिहेतुस्तेनयदिसपिंडादेर्जन्ममरणंवावृतमस्तिनचाशौचप्रतियोगिनाज्ञा
यतेप्रतिग्रहादिकर्त्राज्ञायतेतदापितत्सकाशात्प्रतिग्रहादानेतदन्नभोजनेचनदोषः ॥ यदाहब्रह्मपुराणे ॥ अपिदातृगृहीत्रोश्चसूतकेमृतके
तथा। अविज्ञातेनदोषःस्याच्छ्राद्धादिषुकदाचन।विज्ञातेभोक्तुरेवस्यात्प्रायश्चित्तादिकंक्रमात्॥अथसामान्यतश्चातुर्वर्ण्यस्यमृतकाशौचं
तत्रमनुः।शुद्ध्येद्विप्रोदशाहेनद्वादशाहेनक्षत्रियःवैश्यः।पंचदशाहेनशूद्रोमासेनशुध्यति ॥ ब्रह्मपुराणे । शौचाशौचंप्रकुर्वीरञ्छूद्रवद्वर्णसं
कराः ॥ वर्णसंकराअपकृष्टवर्णेनोत्कृष्टवर्णासुस्त्रीषुजाताः। अनुलोमानांतुस्वजात्युक्तमशौचं ।तत्रापिविशेषमाहबृहस्पतिः। दशाहेनस
पिंडास्तुशुद्ध्यंतिप्रेतसूतके।त्रिरात्रेणसकुल्यास्तुस्नात्वाशुद्ध्यंतिगोत्रजाः॥अत्रदशाहपदंस्वस्वजात्युक्ताशौचोपलक्षकं सपिंडाःसप्तपु
रुषावधयःस्ववंश्याःसप्तमपुरुषादनंतरंदशमंपुरुषंयावत्सकुल्याः दशमपुरुषादनंतरंजन्मनाम्नोरविज्ञानेऽस्मत्कुलजाएवमाकारज्ञानगो
चरागोत्रजाः ज्ञायमानजन्मनाम्नांतुदशमपुरुषाधिकानांमरणजन्मनोः पक्षिणी पक्षिणीमसपिंडइत्यनेनाग्रेवक्ष्यते तदयंसर्वैकवाक्यत
यावाक्यार्थः।ब्राह्मणस्यसपिंडेब्राह्मणेमृतेदशरात्रेणशुद्ध्यति सकुल्येमृतेत्रिरात्रेण ।तदूर्ध्वंज्ञायमानजन्मनामकेकुलजेमृतेपक्षिण्या गोत्र

जेस्नानमात्रेण।क्षत्रियस्यसपिंडेक्षत्रियेमृतेद्वादशाहेनशुद्धिः ।सकुल्येत्रिरात्रेण तदूर्ध्वंपक्षिण्या गोत्रजेस्नानमात्रेण वैश्यस्यसपिंडेवैश्येमृते पंचदशदिनैःशुद्धिः।सकुल्येत्रिरात्रेण तदूर्ध्वंपक्षिण्या गोत्रजेस्नानमात्रेण।शूद्रस्यसपिंडेशूद्रेमृतेमासेनशुद्धिः सकुल्येत्रिरात्रेण तदूर्ध्वंपाक्षिण्या गोत्रजेस्नानमात्रेण ।अत्रचसर्वत्रअहःपदंरात्रिपदंचअहोरात्रपरंज्ञातव्यं। यदारात्रौसंध्ययोश्चमरणजन्मनीभवतः तदातीतदिनेनैवसहाहोरात्रोग्राह्यः । यदाहकश्यपः । रात्रावेवसमुत्पन्नेमृतेरजसिसूतके । पूर्वमेवदिनंग्राह्यंयावन्नैवोदितोरविः॥ उदितेतुयदासूर्येनारीणांदृश्यतेरजः॥जननंवाविपत्तिर्वायस्याहस्तस्यशर्वरी॥अंगिराः॥चतुर्थेहनिकर्तव्यःसंस्पर्शोब्राह्मणस्यतु ॥ पंचमेहनिविज्ञेयः संस्पर्शःक्षत्रियस्यतु ॥ षष्ठेह्नचथतुवैश्यस्याविज्ञेयंस्पर्शनंबुधैः । दशमेहनिशूद्रस्यकार्य्यंसंस्पर्शनंबुधैः । अत्रेदंतात्पर्यं । सर्वाशौचस्यतृतीयभागेऽतीतेंऽगस्पर्शःकर्तव्यः । तथाचदेवलः । आशौचकालाद्विज्ञेयंस्पर्शनंतुत्रिभागतः । शूद्रविट्क्षत्रविप्राणांतथाशास्त्रप्रदर्शनात् ॥ एवंचसतिब्राह्मणादीनांदशाहादिभ्योमनूक्तेभ्योयदूनाधिकसमयत्वमशौचस्यऋष्यंतरोक्तंतद्गुणयुक्तगुणहीनविषयंज्ञेयं।अथजननाशौचं।तत्र मनुः।जननेप्येवमेवस्यान्निपुणाशुद्धिमिच्छतां। सर्वेषांशावमाशौचंमातापित्रोस्तुसूतकं॥ मातुर्वासूतकंप्राहुरुपस्पृश्यापिताशुचिः॥अस्यार्थः । जननेजन्मन्यपिएवमेवमरणवदशौचंदशाहादिव्यापकंभवति । अयांविशेषः । शावमाशौचंमरणहेतुकमस्पृश्यत्वंसर्वेषामशौचभागिनांसूतकंप्रसवनिमित्तकंपुनरस्पृश्यत्वंमातापित्रोरेव तत्रापिविशेषमाह।मातुर्वेति।वाशब्दएवकारार्थः।मातुरेवसूतकंदशाहव्यापकमस्पृश्यत्वलक्षणंप्राहुः । उपस्पृश्यस्नात्वापिताशुचिःस्पृश्योभवतीतिअशौचमितिअशुचेर्भावइति इगंताच्चलघुपूर्वादित्यण् तत्र शुचीश्वरेत्यादिनोभयपदवृद्धिः। संवर्तः। जातेपुत्रेपितुःस्नानंसचैलस्यविधीयते । माताशुद्ध्येद्दशाहेनस्नानात्तुस्पर्शनंपितुः ।

अंगिराः । सूतकेसूतिकावर्जमंगस्पर्शोनदुष्यति।संस्पर्शेसूतिकायास्तुस्नानमेवविधीयते॥यदितुजनकःपत्नींसंस्पर्शंसूतकेकरोति तदा तस्यापियावत्सूतकमस्पृश्यत्वं । तथाचपाराशरः । यदिपत्न्यांप्रसूतायांद्विजःसंपर्कमिच्छति । सूतकंतुभवेत्तस्ययदिविप्रःषडंगवित् ॥ षडंगविदपिविप्रोयदिसंपर्कंसंस्पर्शंकरोति प्रसूतायाःपत्न्यास्तदातस्यसूतकंदशाहमस्पृश्यत्वंभवतीत्यर्थः । अत्रसंपर्कोऽभिगमइ तिव्याख्यानमप्युक्तं । मातुरेवसूतकंतांस्पृशतस्तुपितुर्नेतरेषामितिसुमंतुनैकमूलत्वात्।ब्रह्मपुराणे । सूतकेतुमुखंदृष्ट्वाजातस्यजनकः शुचिः । कृत्वासचैलंस्नानंतुशुद्धोभवतितत्क्षणात्॥अन्याश्चमातरस्तद्वत्तद्गेहंनव्रजंतिचेत्।सपिंडाश्चापिसंस्पृश्याः संतिसर्वेपिनित्यशः॥ अन्यामातरःसपत्नीमातरस्तद्गेहंनव्रजंतितद्गेहंगत्वातांचेन्नस्पृशंतितदाशुद्धाएवस्नानंविनापि।एवंसपिंडाअपितत्स्पर्शेतुस्नानेनशुद्ध्यंति एवमेव हारलता । आचारोपि अत्रस्त्रीजन्मनिस्नानात्तूपदेशात्पितुरपिस्नानंविनैवशुद्धिरितिज्ञेयं।तथा।ब्राह्मणीक्षत्रियावैश्याप्रसूतादशभि र्दिनैः॥ गतैःशूद्राचसंस्पृश्यात्रयोदशभिरेवच॥यातुसूतिकासर्ववर्णानांदशरात्रेणशुध्यतीतिशूद्रायाअपिदशरात्रेणशुद्धिःस्पर्शः कथिता प्रचेतसा।सासच्छूद्रीविषयाज्ञातव्या पैठीनसिः।सूतिकांपुत्रजननींविंशतिरात्रेणस्नातांसर्वकर्माणिकारयेतमासेनस्त्रीजननीं।अस्यार्थः।पु त्रेजातेसूतिकांविंशतिरात्रेऽतीतेपुनःकृतस्नानांपाकादिदृष्टार्थमदृष्टार्थंचकर्मकारयेत्।स्त्र्यपत्योत्पत्तौमासेऽतीतेसर्वकर्माणिकारयेत्।इदं तुशूद्रातिरिक्तविषयंज्ञातव्यं ॥ अथजननमरणशौचयोर्नियमः । तत्रजाबालिः । संध्यांपंचमहायज्ञान्नैत्यिकंस्मृतिकर्मच । तन्मध्ये हापयेत्तेषांदशाहांतेपुनःक्रिया ॥नैत्यिकंवैधस्नानतर्पणादितन्मध्येऽशौचमध्येहापयेत्त्यजेदित्यर्थः । दशाहांतइत्यशौचांतोपलक्षणंतेना शौचांतेतेषांब्राह्मणादीनांपुनःक्रियासंध्यादिकर्मकरणमित्यर्थः । मनुः । उभयत्रदशाहानिकुलस्यान्नंनभुज्यते । दानंप्रतिग्रहोहोमःस्वा

ध्यायश्चनिवर्त्त्यंते ॥ उभयत्रजननेमरणेचदशाहानीत्यशौचकालोपलक्षणं । तेनदशाहानितत्तदशौचकालंव्याप्यकुलस्यासिद्धान्नंनभोक्त
व्यमित्यर्थः । अत्रहोमेविशेषमाह छंदोगपरिशिष्टेकात्यायनः । सूतकेकर्मणांत्यागःसंध्यादीनांविधीयते।होमःश्रौतेतुकर्त्तव्यःशुष्कान्ने
नापिवाफलैः॥अकृतंहापयेत्स्मार्तेंतदभावेकृताकृतं॥कृतमोदनसक्त्वादितंडुलादिकृताकृतं।व्रीह्यादिचाकृतंप्रोक्तमितिद्रव्यंत्रिधाबुधैः।
अस्यार्थः । अशौचेसंध्यादीनांविहितकर्मणांत्यागः । अग्निमतातुश्रौताग्नौशुष्कान्नेनफलेनवाहोमः कर्त्तव्यः । स्मार्ताग्नौतुव्रीह्यादि
नातंडुलादिनावापरद्वाराहोमःकारयितव्यः कृतमोदनसक्त्वादिपरद्वारापिनहापयेत् । अत्रतंडुलादीत्यादिपदेनमाषमुद्गादिग्रहणं । व्री
ह्यादिपदेनयवगोधूमादिग्रहणं। ओदनसक्त्वादिपदेनलाजमोदकलड्डुकादीनांग्रहणं। दानप्रतिग्रहयोर्विशेषमाह मनुः। जातेकुमारेत
दहःकामंकुर्यात्प्रतिग्रहं । हिरण्यधान्यगोवासास्तिलान्नगुडसर्पिषाम् । शंखलिखितौ । कुमारप्रसवेनाड्यामच्छिन्नायांगुडतिलहिरण्यव
स्त्रप्रावरणगोधान्यप्रतिग्रहेषुनदोषः। तदहरित्येकेगुर्वर्थंकर्मकुर्वतः प्रावरणंकंबलादि। अयमर्थः।पुत्रजन्मनिनाडीछेदात्पूर्वंहिरण्यधान्या
दिदद्यात् दातुःप्रतिग्रहीतुश्चदोषोनभवति।गुर्वर्थंप्रतिग्रहीतुस्तद्दिनेनाडीच्छेदादनंतरमपिनदोषः।ब्रह्मपुराणे । देवाश्चपितरश्चैवपुत्रेजाते
द्विजन्मनां॥आयांतितस्मात्तदहःपुण्यंषष्ठंचसर्वदा॥तत्रदद्यात्सुवर्णंचभूमिंगांतुरगंरथं ॥ छत्रंछागंचमाल्यंचशयनंचासनंगृहं ॥ जातश्रा
चनददेत्त्यक्त्वान्नंब्राह्मणेष्वपि।तदहःपुण्यंषष्ठंचदिनंपुण्यमित्यर्थः । पुत्रोत्पन्नेनाडीच्छेदात्पूर्वंजातश्राद्धमसिद्धान्नेनकर्तव्यं।एवंरूपेचश्राद्धे
श्राद्धेअवनेजनपिंडदानादिनास्तीतिभर्तृयज्ञस्वामिनावितिरत्नाकरः।मार्कंडेयः।षष्ठेन्हिरात्रियागंतुजन्मदानांचकारयेत् ।रक्षणीयंतथाष
ष्ठींनिशांतत्रविशेषतः। जन्मदानांषोडशमातृणांषष्टिकासहितानांरात्रियागंकुर्यादित्यर्थः । स्मार्तक्रियानिवृत्तौविशेषमाह शंखः। दानं

प्रतिग्रहोहोमःस्वाध्यायःपितृकर्म्मंच ॥ प्रेतपिंडक्रियावर्जमशौचेविनिवर्तते ॥ प्रेतपिंडदानादिवर्जंसर्वदानादिकर्माशौचेसतिनिवर्त
तइत्यर्थः । वस्तुविशेषेदोषाभावमाहमरीचिः । लवणेमधुमांसेचपुष्पमूलफलेषुच । शाककाष्ठतृणेष्वेवंदधिसर्पिःपयःसुच ।
तैलौषध्याजिनेचैवपक्वापक्वेस्वयंग्रहे ॥ पुण्येषुचैवसर्वेषुनाशौचंमृतसूतके ॥ पयःपदमत्रदुग्धपरं । दध्यादिसाहचर्य्याद्वाक्यां
तरानुरोधाच्च । पक्वंसक्तुमोदकादि । अपक्वंतंडुलादि । तत्स्वयंगृह्यमाणंस्वाम्यनुमत्यानदोषोभवतीत्यर्थः । अत्रपक्वापक्वइत्यत्रैव
स्वयंग्रहइत्यन्वेतिनतुलवणादिष्वपि । एवमेवरत्नाकरस्वरसउन्नीयते तत्स्वयंगृह्यमाणमितिपूर्वपदाक्रांतस्यपक्वापक्वस्यैकवचनांतस
र्वनाम्नाप्रत्यवमर्षात् तेनलवणादीनामशौचिद्वारापिग्रहणेदोषाभावइतिसिद्धं । अथवर्णानांविशेषतोशौचंतत्रदक्षः । सद्यःशौचंतथैकाह
स्त्र्यहश्चतुरहस्तथा ॥ षड्दशद्वादशाहश्चपक्षोमासस्तथैवच ॥ मरणांतंतथाचान्यद्दशापक्षास्तुसूतके ॥ उपन्यासक्रमेणैतान्व
क्ष्याम्यहमशेषतः । सूतकमशौचंतद्दशविधंभवति । तत्रसद्यःशौचंसद्यस्तत्क्षणे स्नानमात्रेणयत्रशौचंभवति तत्सद्यःशौचंस्ना
नमात्रापनेयमशौचं एकाहएकाहोरात्रिज्ञापकं एवंत्र्यहाद्यपि तत्कालव्यापकमशौचंमरणांतमन्यदितिजननमरणनिमित्तकाद्भिन्नं
मरणांतमन्यमशौचंदशममित्यर्थः । तत्रसद्यःशौचमाह । ग्रंथार्थतोविजानातिवेदमंगैः समन्वितं ॥ सकल्पंसरहस्यंचक्रियावां
श्चेन्नसूतकम् ॥ अस्यार्थः ॥ यदिग्रंथतोऽर्थतश्चेवंदविजानातिसम्यक् सिद्धांतन्यायानुसारेणअर्थंजानातिसकल्पंकल्पोज्योतिष्टो
माद्यनुष्ठानपद्धतिस्तत्साहितं अंगैः समन्वितं शिक्षाद्यपरपंचांगसाहितंसरहस्यंरहस्यप्रतिपादकब्रह्ममीमांसादिनिर्णीतार्थसहितंजाना
ति क्रियावान्श्रौतस्मार्ताग्निहोत्रादिक्रियावान्भवति । तदासूतकंनभवति एकाहाद्यशौचंनभवति । तेनसद्यःशौचंभवतीत्यर्थः । तथा

एकाहाद्ब्राह्मणः शुद्ध्येचेदग्निवेदसमन्वितः॥हीनेहीनतरेचैवत्र्यहश्चतुरहस्तथा॥अग्निःश्रौतः स्मार्तश्च। वेदः सांगोऽज्ञातार्थश्च।ब्राह्मणश्चात्र विहितक्रियैकदेशवान्विवक्षितः। तस्यएकाहः हीनः श्रौताग्निहीनः स्मार्ताग्निवान्सांगसार्थज्ञानसंपूर्णवेदवान् तस्यचतुरहोऽशौचकालः। बृहस्पतिः। त्रिरात्रेणविशुद्ध्येत्तुविप्रोवेदाग्निसंयुतः। पंचाहेनाग्निहीनस्तुदशाहाद्ब्राह्मणब्रुवः। अत्राग्निःस्मार्तः। तद्वतोवेदज्ञस्यचपूर्ववत्अहः। अग्निद्वयहीनस्यअर्थाद्वेदांगशून्यकृत्स्नवेदाध्यायिनः पंचाहः। परिशेषादग्निद्वयहीनस्यवेदैकदेशाध्यायिनःषडहः। अत्रवाक्यद्वयतुल्येन्यायतयाअग्निद्वययुतस्याविज्ञातार्थकृत्स्नवेदवतः। सकलविहितक्रियावतः एकाहः। तथाग्निद्वययुतस्यवेदविहीनस्यत्र्यहः। ब्राह्मणब्रुवस्यदशाहः। ब्राह्मणब्रुवश्चपरिभाषितोव्यासेन। गर्भाधानादिभिर्युक्तस्तथोपनयनेनच। नकर्मकृन्नचाधीतेसभवेद्ब्राह्मणब्रुवः॥ तदयंसर्वैकवाक्यतयार्थः। सांगसार्थज्ञानवेदवतोऽग्निद्वययुतस्यसकलविहितक्रियावतोविप्रस्यसद्यःशौचम्। अविज्ञातार्थसांगवेदवतोग्निद्वययुतस्यएकाहः। श्रौताग्निहीनस्मार्ताग्निमतः सांगसार्थज्ञानवेदवतः त्र्यहः। वेदशून्यस्याग्निद्वयवतश्चत्र्यहः। सांगसार्थज्ञानकृत्स्नवेदाध्यायिनोग्निद्वयहीनस्यचतुरहः। अंगशून्यकृत्स्नवेदाध्यायिनोग्निद्वयहीनस्यपंचाहः। वेदैकदेशाध्यायिनोग्निद्वयहीनस्यषडहः। ब्राह्मणब्रुवस्यदशाहइति। पराशरः। संपर्काद्दूष्यतेविप्रोजननेमरणेषुच॥ संपर्कविनिवृत्तानांनप्रेतंनैवसूतकं॥ प्रेतंमरणाशौचमित्यर्थः॥ अत्रसर्वेचैतेयथोक्ताः। सद्यःशौचादिकाअपकर्षपक्षांसपिंडांतराणामशौचिनांसंपर्काभावेसतिबोद्धव्याः। संपर्केचतेषामिवदशाहाद्यशौचंभवति। आचारोपितथा संपर्कश्चात्रएकत्रासनशयनभोजनादिरूपोविवक्षितइतिरत्नाकरः। क्षत्रियवैश्ययोरप्यग्निमतोर्दशाहद्वादशाहौ। तथाच पराशरः। क्षत्रियस्तुदशाहेनस्वकर्मनिरतः शुचिः। तथैव

द्वादशाहेनवैश्यः शुद्धिमवाप्नुयादिति। शूद्रस्यापिविशेषमाहयाज्ञवल्क्यः।क्षत्रस्यद्वादशाहानिविशांपंचदशैवतु ॥त्रिंशद्दिनानिशूद्रस्य तदर्द्धंन्यायवर्तिनः। न्यायवर्तिनःश्रद्धयाद्विजशुश्रूषयाचयज्ञादिशूद्रविहितक्रियावतः। शूद्रस्यपंचदशाहाशौचंसर्वंचेत्तदशौचसंकोचवि धानंनियतेष्वेव होमादिविधिषुनतुसर्वेषुदानान्नभोजनप्रतिग्रहादिषुतेषुकर्तव्येषुब्राह्मणादीनांदशाहादिकंसंपूर्णाशौचमेवानुवर्तते इति मिताक्षराकारादयः।तथाहिदशाहंशावमाशौचमितिसामान्यप्राप्तदशाहबाधपुरस्सरमेवह्येकाहाद्ब्राह्मणः शुद्ध्येदित्यादिविधायकंभवति बाधस्यचानुपपत्तिनिबंधनत्वाद्यावत्यबाधितेनुपपत्तिप्रश्रमोनभवति तावदनेनबाधितव्यं।अतः।कियदनेनबाधितव्यमित्यपेक्षायामपोक्षि तविशेषसमर्पणक्षमस्याग्निवेदसमन्वितेत्यादिवाक्यशेषस्यदर्शनादग्निहोत्रादौकर्मणिस्वाध्यायादौचव्यवतिष्ठते।नपुनर्दानादावपि तथा चब्राह्मणस्यस्वाध्यायाध्यापनानिवृत्त्यर्थंसद्यःशौचमिति। शुद्ध्येद्विप्रोदशाहेनेत्येवमादिभिर्मन्वादिवचनैरेकवाक्यता तथाउभयत्रद शाहानिकुलस्यान्नंनभुज्यते। इतिदशाहपर्यंतभोजनादिकंप्रतिषेधयद्भिः यमादिवचनैरविरोधोपिसिध्यतीत्यतःक्काचित्कमेवेदमशौच विधानंनपुनःसर्वसंव्यवहारादिगोचरमित्यलमितिप्रपंचेनेतिमिताक्षराकारआह।हारलताकारोपि।अयंचाशौचसंकोचोहोमाध्ययनार्थएव च॥नतुसंध्यांपंचमहायज्ञान्नैत्यिकंस्मृतिकर्मच।तन्मध्येहापयेत्तेषांदशाहांतेपुनःक्रिया।उभयत्रदशाहानिकुलस्थान्नंनभुज्यते॥दानंप्रति ग्रहोहोमःस्वाध्यायश्चनिवर्ततेइतिजाबालिवचनयमवचनाभ्यांप्रतिषिद्धानांसंध्यापंचमहायज्ञमृत्तिकाग्रहणमार्जनप्राणायामतर्पणाद्युपेत प्रधानक्रियारूपस्नानात्मकनैत्यिकस्मृतिकर्मकुलान्नभोजनदानप्रतिग्रहकाम्यहोमस्वाध्यायानामप्यनुष्ठानार्थः। अनेकवचनविरोधात् अतोवेदाग्निसंयोगादिनाएकाहत्र्यहादिभिः सर्वाशौचनिवृत्तिरितिव्यामोहएवेत्याहपारस्करगृह्यव्याख्याताहरिहरमिश्रोप्येवमाह।एवंच

शिष्टाचारएवात्रशरणम्।यावज्जीवाशौचदशममाहदक्षः।व्याधितस्यकदर्यस्यऋणग्रस्तस्यसर्वदा॥क्रियाहीनस्यमूर्खस्यस्त्रीजितस्यविशे
षतः।व्यसनासक्तचित्तस्यपराधीनस्यनित्यशः।श्रद्धात्यागविहीनस्यभस्मांतंसूतकंभवेत्॥कदर्योत्रदेवलेनपरिभाषितः।आत्मानंधर्मकृ
त्यंचपुत्रदारांश्चपीडयन्॥लोभाद्यः प्रचिनोत्यर्थान्सकदर्यइति स्मृतः॥अत्रसर्वदेतिप्रत्येकमभिसंबध्यते तेनसर्वदाव्याधितस्यसर्वदाऋ
णग्रस्तस्यमरणांतमशौचंभवतीत्यादिरर्थउन्नेयइतिरत्नाकरः।व्याधितस्यकर्मासामर्थ्यापादकव्याधिमतः।ऋणग्रस्तस्यनित्यंधनिकासे
धितस्य।क्रियाहीनस्यउपनयनादिक्रियाहीनस्य इदंचदृष्टांतत्वेनोपात्तम् ॥ मूर्खस्यगायत्रीरहितस्यस्त्रीजितस्यभार्यावशतयागुरुनिर्भ
र्त्सकस्य व्यसनासक्तचित्तस्यसंध्याकालेप्यकार्य्यगतचित्तस्य पराधीनस्यश्राद्धादिकालेप्यनापन्नचित्तस्य श्रद्धात्यागविहीनस्यश्रद्धा
वेदबोधितेष्वित्थमेवेतिनिश्चयःत्यागोत्रावश्यकश्राद्धादिताभ्यांरहितस्य।सर्वदेतिप्रत्येकमभिसंबध्यते।तेनसर्वदाव्याधितादेर्नाशौचनिवृ
त्तिः । प्रायश्चित्तेनकर्मण्यनधिकारइति शुद्धिप्रदीपः ।इदंचाशौचजननमरणनिमित्तकाद्भिन्नमेवदशमं।ब्रह्मपुराणे । अन्यपूर्वागृहेयस्य
भार्यास्यात्तस्यानित्यशः । आशौचंसर्वकार्येषुगृहेभवतिसर्वदा।दानंप्रतिग्रहोहोमःसर्वंतस्यवृथाभवेत्।गेहेइत्युपादानात् यस्यगृहकृत्य
कारिणीअन्यपूर्वाभार्याभवतितस्यब्राह्मणादेः सर्वस्यसर्वदाशौचंभवतीति । एवमेवरत्नाकरादयः । शंखः । हीनवर्णातुयानारीप्रमादा
त्प्रसवंव्रजेत्॥प्रसवेमरणेतज्जमशौचंनोपशाम्यति॥ हीनवर्णाशूद्रा।प्रमादाद्रागांधतयाकृतसंगात्।ततोयमर्थःअपरिणीतावाशूद्रायद्युत्तम
वर्णैनरागकृतसंगमात्प्रसूतास्यात्तदातत्प्रसवमरणयोः गर्भजनकस्ययावज्जीवमशौचमित्यर्थः । अथाशौचसंकरः । तत्रकूर्म्मपुराणे ।
अघानांयौगपद्येतुज्ञेयाशुद्धिर्गरीयसा ॥मरणोत्पत्तियोगेतुगरीयोमरणंभवेत्॥अघानामशौचानांविषमकालव्यापकानांयौगपद्येएकस्मि

न्सत्यपरोपनिपातेअधिकदिनव्यापकेनाशौचेनातीतेनशुद्धिर्ज्ञेया । अस्यापवादमाह । मरणोत्पत्तियोगेतुगरीयोमरणंभवेदिति । ज
ननमरणाशौचसंकरेमरणाशौचमल्पकालव्यापकमपिगरीयः । तेनजननाशौचमध्येमरणनिमित्तकसद्यःशौचांतरोपनिपातेनैवजन
नाशौचंबाध्यते । सजातीयसमानदिनव्यापकेव्यवस्थामाह । ब्रह्मपुराणे । आद्यंभागद्वयंयावत्सूतकस्यतुसूतके । द्वितीयेप
तितेचाद्यात्सूतकाच्छुद्धिरिष्यते । अतऊर्ध्वंद्वितीयात्तुसूतकांताच्छुचिः स्मृता । एवमेवविचार्यस्यान्मृतकेमृतकांतरे । अत्र
चतुर्द्धाविभक्ताशौचकालस्यआद्यभागद्वयेयदिसमानदिनव्यापकंसजातीयमशौचांतरमापततितदापूर्वाशौचव्यपगमेनशुद्धिः । अग्रि
मभागद्वयेशौचांतरोपनिपातेअग्रिमाशौचव्यपगमेनैवशुद्धिः । तत्रापिअशौचांतिमदिनेआशौचांतरोपनिपातेविशेषमाहविष्णुः । रा
त्रिशेषेदिनद्वयेनप्रभातेदिनत्रयेणेति अत्ररात्रिशब्दोऽहोरात्रपरः । रात्रिरहोरात्रः शेषोयत्रतद्रात्रिशेषमशौचंतस्मिन्नशौचे शौचांतरो
पनिपातेदिनद्वयेनशुद्धिः । अवशिष्टाहोरात्रादधिकेनदिनद्वयेनशुद्धिः । यदित्वशौचांतदिनेसमंदिनद्वयंस्यात्तदाएकेनेत्येवंब्रूयात् ।
तदयमर्थः । अशौचांतिमेहोरात्रेयद्यपरंसम्पूर्णाशौचमापततितदापूर्वाशौचांतराधिकेनदिनद्वयेनशुद्धिरिति । प्रभातेऽशौचांतराहोरात्रशेषे
सूर्य्योदयात् प्राक्प्राचीप्राकाशेवृतसंपूर्णाशौचांतरोपनिपातेसूर्योदयादनंतरादिनत्रयेणशुद्धिः । अत्रचअथयदिदशरात्राः सन्निपाते
पुराद्यंदशरात्रमशौचमित्यादिवाक्येनपरिशेषेणचसंपूर्णसमानजातीयाशौचांतरोपनिपातेव्यवस्थाविज्ञायते । तथाहि । गरीयसाल्प
दिनव्यापकानांसजातीयानांबाध्यत्वविधानात्विजातीयानांजननाशौचानामल्पदिनव्यापकत्वेनापिमरणशौचेनबाध्यत्वविधानात्परि
शेषेणाबाध्यंसमानकालव्यापकंसजातीयंयत्राशौचद्वयंनिपततितत्रेयंव्यवस्था । विषमदिनव्यापकयोर्विजातीययोश्चनेयंव्यवस्था । तत्र

गरीयसैवव्यवस्थेति।एवमेवरत्नाकरप्रभृतयः।असंपूर्णाशौचानांसमकालव्यापकानांयौगपद्येउत्तरेणैवशुद्धिः।पूर्वव्यवस्थायाः संपूर्णाशौ
चविषयत्वात् ।वर्द्धितेद्व्यहाशौचेत्र्यहाशौचेचसंपूर्णमशौचांतरंयदिनिपतिततदाद्व्यहत्र्यहयोर्लघुत्वाद्गुरुतराग्रिमाशौचव्यपगमेनैवशुद्धि
रितिप्रतिभाति।देवलः। परतःपरतःशुद्धिरद्यवृद्धौविधीयते। स्याच्चेत्पंचतमादह्नःपूर्वेणाप्यनुशिष्यते। अस्यार्थः। एकस्मिन्नशौचेस
तितच्छेषदिनासमानाशौचांतरोपनिपातेपंचमादह्नःपरतः। परेणचेत्स्यादद्यवृद्धिस्तदापरतःपरेणसंपूर्णाशौचेनातीतेनशुद्धिः। पू
र्वेणाप्यनुशिष्यतेतिपंचतमादह्नः।पूर्वेणताद्दशाशौचांतरोपनिपातेपूर्वेणैवाशौचेनापगतेनशुद्धिः। एवंचैतद्वाक्यंब्रह्मपुराणीयवाक्यसमा
नार्थमेवेतिमंतव्यम्।कूर्मपुराणे।अद्यवृद्धिर्यदाशौचमूर्ध्वंचैतेनशुद्ध्यति।अथचेत्पंचमीरात्रिमतीत्यपरतोभवेत्।उर्ध्वंप्रथमाशौचादनंतर
मद्यवृद्धिर्यदाशौचंभवतितदातेनप्रथमेनैवशुद्धिः।अथचेत्पंचमीरात्रिमतीत्यपरतोभवेत्।तदापरतःपरेणशुद्धिरित्यर्थः।एवंचब्रह्मपुराण
कूर्मपुराणदेवलवाक्यैकवाक्यतयाविष्णुवाक्यमपिसंपूर्णाशौचप्रथमार्धविषयमित्यवसीयते।तदाहविष्णुः। जननाशौमध्येयद्यपरंजननं
स्यात्तदापूर्वाशौचव्यपगमेनशुद्धिः।रात्रिशेषेदिनद्वयेनप्रभातेदिनत्रयेण मरणाशौचमध्येज्ञातिमरणेप्येवम्। रात्रिशेषइत्यादिपूर्वमेवव्या
ख्यातम्।बौधायनः।जननमरणयोःसन्निपातेसमानेदशरात्रयः।अथयादिदशरात्राःसंन्निपतेयुराद्यंदशरात्रमशौचमानवमात्दिवसात्।समा
नेएकस्मिन्दिनेजननेजननांतरस्यमरणेमरणांतरस्यसंनिपातेदशरात्रएवनन्यूनंनाधिकमशौचंव्यवहर्तव्यंदिनांतरेआनवमाद्दिवसात्य
दिदशरात्राःसंनिपतेयुराद्यंदशरात्रमशौचंस्यात्।अयंसामान्याविधिः। ब्रह्मपुराणैकवाक्यतयापंचमादिनानंतरोपनिपातेबाधकेनापोह्य
तेएवमेववाक्यांतराविरोधोप्यूह्यः। अत्रचप्रकरणेपंचमपदंसंपूर्णाशौचार्थोपलक्षकंनवमपदंसंपूर्णाशौचोपांत्यदिनपरम्। दशरात्रपदं

संपूर्णाशौचोपलक्षकम् ।यमः। अद्यवृद्धावशौचंतुपश्चिमेनसमापयेत्।एतदसंपूर्णाशौचानांसंनिपातेज्ञेयम्। लघुहारीतः। सूतकेमृतकंचे
त्स्यान्मृतकेसूतकंतथा । मृतेनसूतकंगच्छेन्नेतरत्सूतकेनतु । तदेषाव्यवस्था । दशाहाशौचेपंचमदिनपर्यंतंयदिद्वितीयंसजातीयंद
शाहाशौचमापततितदापूर्वाशौचव्यपगमेनशुद्धिः । पंचमदिनानंतरंनवमदिनपर्यंतंद्वितीयेशौचेसत्यग्रिमाशौचव्यपगमेनशुद्धिः द
शमदिनेसंपूर्णाशौचांतरेसतितद्दिनानंतरंदिनद्वयेनशुद्धिः । दशमदिनरात्रिशेषेअरुणोदयवेलायांसंपूर्णाशौचांतरोपनिपातेसूर्योदया
दनंतरंत्रिरात्रेण । एवंक्षत्रियवैश्यशूद्राणांसंपूर्णस्वस्वाशौचपूर्वार्द्धेसमानदिनव्यापकमशौचांतरंयदिभवतितदापूर्वाशौचव्यपगमेनशु
द्धिः। अग्रिमार्द्धेअग्रिमाशौचव्यपगमेनशुद्धिः। अशौचांतदिनेअशौचांतरोपनिपातेसर्वेषांतद्दिनानंतरंदिनद्वयेनशुद्धिः। अशौचांतदि
नशेषप्रभातकालेऽशौचांतरोपनिपातेअधिकेनदिनत्रयेणशुद्धिः। त्र्यहाद्यसंपूर्णाशौचेसमकालाशौचांतरोपनिपाते अग्रिमाशौचव्यपग
मेनशुद्धिः । सूतकाभ्यंतरेमरणोपनिपातेमरणेवासतिसूतकोपनिपातेमरणाशौचव्यपगमेनैवशुद्धिः । एषाचकुलप्रयुक्ताशौचे
व्यवथा । यत्तुस्त्रीणांस्वप्रसवनिमित्तमशौचंतत्प्रातिस्विकंतदन्येननबाध्यते। तेनस्त्रीणांपतिमरणेपिपुत्रजन्मनिविंशतिदिनेभ्यऊर्द्धंक
न्याजन्मनिमासादूर्ध्वंश्राद्धाद्यदृष्टार्थकर्मणिदृष्टार्थपाकादिकर्मणिचाधिकारः । एवमेवप्रामाणिकव्यवहारः । अत्रपित्रादिमरणेअशौ
चांतरोपनिपातेविशेषोदर्शितोहारलतामिताक्षराभ्यां। सतुरत्नाकरादिषुदर्शनाभावादुपेक्षितः। अथविदेशस्थाशौचम्।तत्रमनुः।विगतं
तुविदेशस्थंशृणुयाद्योह्यनिर्दशम्। यच्छेषंदशरात्रस्यतावदेवाशुचिर्भवेत्। अतिक्रांतेदशाहेतुत्रिरात्रमशुचिर्भवेत् । संवत्सरेव्यती
तेतुस्पृष्ट्वैवापोविशुध्यति । यद्देशमरणेतद्दिनेवार्तानप्राप्तासाविदेशः । तत्रविगतंविनष्टंअनिर्दशमनतीतदशाहं यः पुरुषःशृणुयात्त

स्ययच्छेषमवशिष्टंतावदेवाशुचिर्भवेत् । अतिक्रांतेदशाहेतुत्रिरात्रमशुचिर्भवेत् । संवत्सरेऽतिक्रांतेतुस्पृष्ट्वैवापोविशुद्ध्यति । अत्र
अनिर्दशइतिदशशब्दः । संपूर्णाशौचोपलक्षकः । दशरात्रदशाहशब्दावपिसंपूर्णाशौचोपलक्षकौ तेनायमर्थः । विदेशस्थसपिंड
मरणश्रवणेऽशौचकालाऽनपगमेयावदवशिष्टमशौचकालस्यतावदशौचंचतुर्भिर्वर्णैः कर्तव्यम् । अतिक्रांतेतुसंपूर्णाशौचकालेत्रिरा
त्रमशौचंकर्तव्यम् । वर्षानंतरंसपिंडमरणश्रवणेस्नानमात्रेणशुद्धिः । एवंचैतदेकवाक्यतयास्वेस्वेऽहनिव्यतीतेतुत्रिरात्रमशुचिर्भवेत् ।
इत्यत्रस्वस्वाहपदंचातुर्वर्ण्यसंपूर्णाशौचकालपरमेव । तेनात्रिरात्रादावशौचकालेव्यतीतेज्ञात्यादिमरणश्रवणेऽशौचाभावएव । यदि
तुस्वेस्वेऽहनियस्ययावानशौचकालस्तदतिक्रमेत्रिरात्रमविशेषेणैवेत्यर्थःस्यात्तदैकाहाशौचातिक्रमेपित्रिरात्रंस्यात् । एवंसतिन्यायसि
द्धिरागामिकश्चाशौचातिक्रमे। शौ।चापकर्षःसाधुसमर्थितःस्यात्।तस्मादसंपूर्णाशौचेऽह्नादावतीतेस्नानोदकदानेएव।तथाचयाज्ञवल्क्यः।
प्रोषितेकालशेषःस्यात्पूर्णेदत्त्वोदकंशुचिरितिपूर्णेऽशौचकालइत्यर्थः। अत्रोदकदानेनस्नानमप्याक्षिप्यते।प्रेतोदकदानस्यसर्वत्रस्नानपूर्व
कत्वात् । मनुः । निर्दशंज्ञातिमरणंश्रुत्वापुत्रस्यजन्मच । सवासाजलमाप्लुत्यशुद्धोभवतिमानवः । अत्रनिर्दशंनिष्क्रांताशौचो
पलक्षकमित्यर्थः । तेनैवतदपित्रिरात्राशौचातिक्रमविषयंबोद्धव्यम् । सपिंडमरणएवदशाहानंतरंश्रवणेविशेषमाहगौतमः ।
श्रुत्वाचोर्ध्वंदशम्याःपक्षिणीति । दशम्याअशौचांतररात्रेरूर्ध्वं सपिंडमरणंश्रुत्वापक्षिणीअशौचकालःपुरुषस्यभवति । आगामि
वर्तमानदिनद्वयसहितारात्रिः । तुल्यतयापूर्वापररात्रिसहितंदिनंवा । देवलः । अशौचाहःस्वतीतेषुबंधुश्चेच्छ्रूयतेमृतः । तत्रत्रिरात्रमा
शौचंभवेत्संवत्सरांतरे।ऊर्ध्वंसंवत्सरार्द्धात्तुश्रूयतेचेन्मृतःस्वकैः।भवेदेकाहमेवात्रतच्चसंन्यासिनांनतु।नाशुच्यंप्रसवस्यास्तिव्यतीतेषुदि

नेष्वपि। तदत्रगौतमोक्तपक्षिणीसंवत्सरार्द्धादूर्ध्वंव्यवतिष्ठतेततःपूर्वंदेवलेनत्रिरात्राभिधानात् । देवलोक्तएकाहस्तदुपरिमासत्रयेव्यवतिष्ठते।तदयंसर्वैकवाक्यतयार्थः।अनतीताशौचकालंयदिविदेशस्थसपिंडमरणंश्रूयतेतदायावदवशिष्टमशौचकालस्यतावदाशौचंकर्तव्यं। यदितुसंपूर्णाशौचस्यकालेऽतीतेषण्मासाभ्यंतरंसपिंडमरणंश्रूयते तदात्रिरात्रंतदूर्ध्वंनवममासपर्यंतंपक्षिणी तदूर्ध्ववर्षंयावदेकमहोरात्रमशौचं वर्षानंतरंस्नानमुदकदानंचत्र्यहाशौचादावतीतेसर्वदैवस्नानोदकदानमात्रम्।जननाशौचकालेत्वतीतेजननश्रवणेसर्वदाअशौचाभावः। अत्रपित्रादीनांविदेशस्थानांमरणश्रवणेमिताक्षराहारलताभ्यांविशेषोलक्षितः।सतुरत्नाकरादिभिरलिखितत्वादपेक्षितः।महानद्यादिव्यवहितेदेशांतरमृतस्यमरणश्रवणेसद्यःशौचम्।तथाचपैठीनसिः।देशांतरमृतस्यसद्यःशौचम्। अत्रदेशांतरंपरिभाषितं। अत्रबृहस्पतिः देशांतरंवदंत्येकेशतयोजनमायतम्। चत्वारिंशद्वदंत्येकेत्रिंशदेकेतथैवच । वृद्धमनुरप्याह।वाचोयत्रविभिद्यंतेगिरिर्वाव्यवधायकः।महानद्यंतरंयच्चतद्देशांतरमुच्यते। देशनामनदीभेसन्निकटेतुभवेत्तुयत्। तत्तुदेशांतरंप्रोक्तंस्वयमेवस्वयंभुवा॥दशरात्रेणयावार्त्तायत्रनश्रूयतेऽथवा।अत्रनानाकल्पेष्वनुगत्यानध्यावसायस्तस्माद्व्यवस्थोच्यते॥अत्रोत्सर्गस्तावत्षष्टियोजनानंतरं।यत्तुचत्वारिंशद्योजनानंतरस्यत्रिंशद्योजनानंतरस्यच देशांतरत्वमुक्तंतद्भाषाभेदेपिगिर्यादिव्यवधानेसतियोजननियमाभावंदर्शयितुं । तेनायमर्थः । षष्टियोजनाभ्यंतरेपियत्रभाषाभेदोगिरिमहानदीव्यवधानंचास्तितत्रतावतैवदेशांतरत्वंनतुयोजनापेक्षा । एतद्विषयएववृद्धमनुवचनम् । तच्चस्वयमेवविवृणोतिस्म देशनामनदीभेदादित्यादिना । गिर्यादिव्यवधानाभावेतुनियमार्थमाहदशरात्रेणेत्यादि । तेनगिर्यादिव्यवधानाभावेयत्रस्थवार्तादशाभ्यंतरेनश्रूयतेतद्देशांतरम् । एतदपिपुरुषशक्त्यऽपेक्षयाऽव्यवस्थितमतःषष्टियोजनांतरोपलक्षकमेवतावद्देशस्यद

शाहेनोत्सर्गतः पुरुषेणगंतुमशक्यत्वात् । अतएवगिर्यादिसमुदायव्यवधानाभावेपिशास्त्रीयषष्टियोजनानंतरेप्रयागेमृतस्यतीरभुक्तिदेश
स्थितंप्रतिदेशांतरमृतत्वव्यवहारः । गिरिर्वैतिवाशब्दः समुच्चये । ततश्चायमर्थः । षष्टियोजनानंतरोदेशोदेशांतरंषष्टियोजनाभ्यंतरे
पियत्रभाषाभेदगिरिनदीव्यवधानानिभवंतितदपिदेशांतरम् । तस्मिन्देशांतरेमृतस्यसद्यःशौचम् । अथबालाद्यशौचम् । तत्रयाज्ञव
ल्क्यः।आदंतजननात्सद्यआचूडान्नैशिकीस्मृता । त्रिरात्रिमाव्रतादेशाद्दशरात्रमतःपरं । नैशिकीअशुद्धिः । अहोरात्रमशौचमित्यर्थः ।
अत्रदंतजननशब्देनदंतजन्मकालोलक्ष्यते । सचसप्तमोमासः । दंतजन्मसप्तमेमासीत्युपनिषद्दर्शनात् । चूडाशब्देनापि
चूडाकालोलक्ष्यते । सचतृतीयंवर्षंतृतीयेवाअप्रतिहतइतिचूडाविधानात् । अत्रयद्यपिसांवत्सरिकस्यचूडाकरणमिति । प्रथमवर्षेवि
धानमप्यस्ति । तथापिविप्रेन्यूनेत्रिभिर्वर्षैरित्यादिवाक्येनद्वितीयवर्षसमाप्तियावत्तन्नैशिकीविधानात्तदेकवाक्यतयातृतीयाएवगृ
ह्यते । चूडाकालऔत्सर्गिकस्तृतीयाब्दः । प्रथमाब्देतुकुलधर्मवशादपवादतश्चूडाकरणमितिहारलता । व्रतंउपनयनेनापित्वकाल
उपलक्ष्यते । सचषड्वर्षानंतरएवपर्यवसितः । तच्चब्रह्मपुराणे । द्विजन्मनामयंकालस्त्रयाणांतुषडाब्दिक इतिसुव्यक्तमेव । मर्या
दायांचात्राङ् । तेनसप्तममासमेवाधिकृत्यबालमरणेसद्यःशौचं। सप्तममासमारभ्यद्वितीयंवर्षसमाप्तियावदेकाहोरात्रम् । ततःषष्ठंवर्षंव्या
प्यत्रिरात्रम्।तदनंतरंदशरात्रादिकंस्वस्वजात्युक्तंब्राह्मणादीनांत्रयाणांशूद्राणांविशेषोभविष्यति ।अत्रोपनयनेनकालव्यवस्थापनात् ।
बालस्यपुंस्त्वंविवक्षितंतेनकन्यानां मरणेनेदमशौचं। तत्रविशेषोवक्ष्यते पारस्करः। अंतःसूतकेचेदाजननाशौचमध्येबालेमरणेसूतक
उत्थानादाशौचंमृतवत्तत्रोक्तंकर्म । अस्यार्थः । अंतःसूतकेसूतकाभ्यंतरेचेद्बालोविपद्यतेतदाआउत्थानाद्दशमादिनंयावदशौचंभ

वति इदंचआउत्थानादित्यभिधानान्मातुरेव । अन्येषांतुपूर्वोक्तंसद्यःशौचमेव । अपत्यमात्रमरणंचेहविवक्षितंशेषानुपस्थापनात् ।
अंगिराः । विप्रेन्यूनेत्रिभिर्वर्षैर्मृतेशुद्धिस्तुनैशिकी । द्व्यहेनक्षत्रियेशुद्धिस्त्रिभिर्वैश्येमृतेसति।निर्वृत्तचूडकेविप्रेत्रिरात्राच्छुद्धिरिष्यते । नि
वृत्तेक्षत्रियेषड्भिर्वैश्येनवभिरेवच । त्रिभिर्वर्षैर्न्यूनइत्यत्रत्रिभिर्वर्षैरुपलक्षितात्न्यूनेसंपूर्णद्विवर्षइत्यर्थः निर्वृत्तचूडकइति । निर्वृत्ता
चूडाविहितायस्येतिनिर्वृत्तचूडकः । शेषंसुबोधं । ब्रह्मपुराणे । अनुपनीतोविप्रस्तुराजाचैवधनुर्ग्रहात् । अग्रहीतप्रतोदस्तुवैश्यः
शूद्रःस्ववस्त्रयुक् । म्रियेतयत्रतत्रस्यादशौचंत्र्यहमेवहि । द्विजन्मनामयंकालस्त्रयाणांतुषडाब्दिकः । पंचाद्विकस्तुशूद्राणांस्वजात्युक्तम
तःपरं । अत्रक्षत्रियवैश्ययोः षडब्दभ्यंतरेत्रिरात्राभिधानंवेदाग्निमतोरेव।अन्येषांषडहनवाहौपूर्वोक्तौ एवमेवहारलताकारः । शूद्रस्यापिपं
चाब्दाभ्यंतरेत्रिरात्राभिधानंसच्छूद्रविषयम्।इत्थमेवहारलतारत्नाकरौ।सच्छूद्रास्तुविशेषाशौचेपूर्वंदर्शिताः।यदपिअनूढानांतुकन्यानां
तथावैशूद्रजन्मनामितिशूद्रस्यत्रिरात्राभिधानंतदपिसच्छूद्रविषयमेव।सामान्यतस्तुशूद्राणामंगिरोवाक्येनैवव्यवस्था।तद्यथा। शूद्रेद्विव
र्षान्न्यूनेतुमृतेशुद्धिस्तुपंचभिः।अतऊर्ध्वंमृतेशूद्रेद्वादशाहोविधीयते।षड्वर्षांतमतीतस्तुशूद्रःसम्रियतेयदि । मासिकंतुभवेच्छौचमित्यांगि
रसभाषितम् । एतत्षड्वर्षोपरिमासिकाशौचविधानंविवाहितशूद्रविषयम् । अविवाहितस्यषोडशवर्षंयावद्द्वादशाहस्तदनंतरंमासिकमेवा
शौचं।तथाचशंखः।अनूढभार्यःशूद्रस्तुषोडशाद्वत्सरात्परं।मृत्युंसमधिगच्छेच्चेन्मासंतस्यापिबांधवाः। शुद्धिंसमधिगच्छंतिनात्रकार्याविं
चारणा। तदेषासमस्ताखंडलकेनव्यवस्था। ब्राह्मणानांसप्तममासात्प्राक्बालकेमृतेसद्यःशौचंसप्तममासादारभ्याद्वितीयवर्षसमाप्तिंयावत्
एकमहोरात्रमशौचं । तृतीयवर्षादारभ्यषड्वर्षांतंयावत् त्रिरात्रं।तदुपरिदशाहमशौचंभवति।क्षत्रियाणांसप्तमासात्प्राक्सद्यःशौचम् ।तदनं

तरंद्वितीयवर्षांतंयावद्व्यहं । द्वितीयवर्षादारभ्यषड्वर्षांतंयावत्षडहः । तदुपरिद्वादशाहमशौचंभवति । वैश्यानांसप्तमासात्प्राक्सद्यःशौचं तदनंतरंद्वितीयवर्षांतंयावत्र्यहम् । तदुपरिषड्वर्षांतंयावन्नवाहम् । तदुपरिपंचदशाहंशौचंभवति । शूद्राणांसप्तममासात्प्राक्सद्यःशौचम्। सप्तममासादारभ्यद्वितीयवर्षसमाप्तिंयावत्पंचाहम् । तृतीयवर्षादारभ्यषोडशवर्षंयावत् अविवाहितमृतेद्वादशाहम्।तदुपरिमासमशौचं भवति।विवाहितेषड्वर्षादेवोपरिमृतेसतिमासमशौचंभवतियेषांशूद्राणांद्विजोच्छिष्टभोजनंद्विजशुश्रूषामासिमुंडनंचतेसच्छूद्राः । तेषां सप्तममासादारभ्यपंचवर्षंयावन्मृतेबालेत्रिरात्रम् । तदुपरिषोडशवर्षाणियावदविवाहितमृतेद्वादशाहम् । तदुपरिपंचदशाहमशौचं । विवाहिताविवाहितेसाधारणम् । प्रसूतिकानांतुसर्वासामेवदशाहाभ्यंतरेबालमरणेयावद्दशाहः पूर्यतेतावदशौचंभवति । अत्रसर्ववर्णा नामसंपूर्णद्विवर्षोबालोमृतोभूमौनिखननीयः । अग्निदानंतस्यनकर्तव्यं।यदितुप्रमादादिनातस्याग्निदाहः क्रियते तदाब्राह्मणानांत्रिरात्रं। क्षत्रियाणामेवदशाहं । वैश्यानांद्वादशाहं । शूद्राणांविंशतिरात्रमशौचंभवति । तथाचब्रह्मपुराणे अनतीतद्विवर्षस्तुप्रेतोयत्रापिदह्यते । अतिमोहाभिभूतैश्चदेशसाधर्म्यमार्दवात्। अशौचंब्राह्मणानांतुत्रिरात्रंतत्रविद्यते।राज्ञामेकादशाहंतुवैश्यानांद्वादशाह्निकम्।अपिविंशति रात्रंतुशूद्राणांभवतिक्रमात्।अथत्र्यहाशौचंब्रह्मपुराणे।आजन्मनस्तुचूडांतंयत्रकन्याविपद्यते।सद्यःशौचंभवेत्तत्रसर्ववर्णेषुनित्यशः।ततो वाग्दानपर्यंतंयावदेकाहमेवहि। अतःपरंप्रवृद्धानांत्रिरात्रमितिनिश्चयः। वाक्प्रदानकृतेतत्रज्ञेयंचोभयतस्त्र्यहं । पितुर्वरस्यचततोदत्ता नांभर्त्तुरेवहि।स्वजात्युक्तमशौचंस्यात्सूतकेमृतकेपिवा।अतःपरमकृतवाग्दानावस्थातःपरंप्रवृद्धानांप्राप्ताधिकरूपाणामित्यर्थः।अधिरू पंव्यक्तीकरोतिवाक्प्रदानेकृतइति ।उभयतइतिव्याकरोतिपितुर्वरस्यचेति । वरस्यभर्तुरित्यर्थः । ततोदत्तानांविधिपूर्वंदत्तानांभर्तुरेव

स्वजात्युक्तमशौचंभवतीत्यर्थः।एवमेवहारलता।यत्रतुवाग्दानंनभवतितत्रचूडानंतरंविवाहपर्यंतमेकाहमेवाशौचंभवतीत्यर्थः।तथाचया
ज्ञवल्क्यः। अहस्त्वदत्तकन्यासुबालेषुचविशोधनं।अस्यार्थः। अदत्तकन्यासुमृतासुबालेषुचजातदंतेषुमृतेषु अहरेकमहोरात्रमशौचंभ
वति। अयमत्रसमुदायार्थः। सर्ववर्णानांद्वितीयवर्षांतंयावत्कन्यामरणेसद्यःशौचं।तदनंतरंविवाहपर्यंतमेकाहोरात्रमशौचं।विवाहानंतरं
पितृकुलेऽशौचंनभवति। स्वामिकुलेसंपूर्णाशौचंभवति।यत्रतुयातुभ्यमेषादातव्येतिवाग्दानंक्रियतेतत्रचूडानंतरंमृतायांतस्यांविवाह
पर्यंतंपितृपतिपक्षयोर्द्वयोरपित्रिरात्रमितिविशेषः। विवाहितासुविशेषमाह। ब्रह्मपुराणे।दत्तानारीपितुर्गेहेसूयतेम्रियतेऽथवा॥स्वयंशौचं
चरेत्सम्यक्पृथक्स्थानेव्यवस्थिता॥तद्बंधुवर्गस्त्वेकेनशुध्यतेजनकस्त्रिभिः॥ अत्रजनकस्त्रिभिरितिजनकशब्देनजननकर्तृत्वोपलक्षणा
ज्जनन्या आपित्रिरात्रेणशुद्धिः।तथाहि।सिद्धवत्पारिजातरत्नाकरयोर्मातापित्रोस्त्रिरात्रमित्युक्तं।हारलताकारेणापितथैवहेतुपूर्वकमलेखि।
बंधुवर्गइत्यत्रापिवर्गशब्देनएकक्रियापन्नाएकाश्रमस्थाभ्रातृवैमात्रेयपितृव्यतत्पुत्रास्तेषांपुत्राश्चगृह्यंते।तेषामेकाहः। अतएवसिद्धवत्पा
रिजातहारलतारत्नाकरेषु भ्रात्रादीनामेकाहइत्युक्तं। पितुर्गेहेति सनाभिगृहोपलक्षणं। निजगृहेऽसपिंडमरणेपितत्रतत्राशौचश्रवणाद
त्रापिभ्रात्रादिगृहमरणमपिविवक्षितं। मरणसाहचर्यादत्रजननमपितादृग्लभ्यते।एतच्चपारिजातस्यानुमतमेव।तथाहि।तेननिजव्याख्याने
विशेषमनभिधायपितृगृहइतिपितृशब्दस्यविवक्षितत्वात्।भ्रात्रादिगृहेनिवसंत्याःप्रसवेमरणेचतत्यशौचंनभवतीतिप्रकाशकारइत्युक्त
मतःप्रकाशकारस्यमतमेतत्।ममतुमतेपितृशब्दस्याविवक्षितत्वं।किंत्वशौचभागिगृहंविवक्षितमितितस्यार्थोवगम्यते। विशेषानभिधा
नात्।रत्नाकरस्वरसोप्येषलक्ष्यतइतितादियमत्रव्यवस्था।विवाहितास्त्रीयदिपितृगृहेसूयतेम्रियतेवातदामातापित्रोस्त्रिरात्रमशौचं।एका

श्रमवासिनांभ्रातृवैमात्रेयपितृव्यपुत्राणांतत्पुत्राणांपितृव्यस्यचैकरात्रं ।पितुर्भिन्नाश्रमवासिनांभ्रात्रादीनामशौचंनभवतीपितुरभावेमातृ
गृहेदुहितुर्मरणेप्रसवेवामातुस्त्रिरात्रमेवमातुरभावेभ्रातृगृहेभगिन्याःप्रसवेमरणेवाभ्रात्रादीनामेकरात्रमेवाशौचंभवति।तथा । पित्रादत्तातु
याकन्यास्वातंत्र्यादन्यमाश्रिता । यंयंश्रितवती भूयस्तस्याशौचंत्र्यहंत्र्यहं । मृतायांवाप्रसूतायांनान्येषामितिनिश्चयः । कामादक्षत
योनिश्चेदन्यंगत्वाप्यवस्थिता । तस्यान्यस्यसगोत्रासागत्वाश्रितवतीस्वयं । अस्यार्थः । विवाहितास्त्रीपाणिग्राहकादन्यंयंपुरुष
माश्रयति । तस्यैवपुरुषस्यतस्यांमृतायांप्रसूतायांवात्रिरात्रमशौचंभवति । स्वयंग्राहककुलजानामशौचंतत्रनभवति । यदिचपा
णिग्राहकेणतस्याःसंगमःकृतस्तदातस्याः पाणिग्राहकगोत्रमेवतिष्ठतिस्वयंग्राहकगोत्रंनभवति ।यदितस्यास्तत्संगमोनवृत्तस्तदायमे
वाश्रितवतीभवतितस्यैवान्यस्यान्यगोत्रस्यसगोत्रासाभवति।अशौचंतत्रापित्र्यहमेव । तथा । पदेतुसप्तमेयत्रबलात्काचिद्धृताभवेत् ।
स्वामिगोत्रंभवेत्तस्यास्तच्चभूयोविशिष्यते।पितृकंत्वप्रसूतायांततः पौर्विकभर्तृकं । अस्यार्थः पाणिग्रहणेवृत्तेऽसमाप्तेसप्तपदीसमारो
हणे याबलात्हृताअन्यमाश्रिताभवतितस्याः स्वामिगोत्रं पाणिग्राहकगोत्रमेवभवति । तत्रापिविशेषमाह । तच्च भूयोविशिष्यते ।
भूयःपुनस्तद्गोत्रंविशिष्यते विभज्यतेइत्यर्थः । विभागमाह पैतृकंत्वप्रसूतायामित्यादि । तस्यबलात्कारहृतायायावत्प्रसवोनभव
तितावत्पितृगोत्रमेवावतिष्ठते ।प्रसवानंतरंपौर्विकस्यभर्तुः पाणिग्राहकस्यैवगोत्रमवतिष्ठते । बलात्कारहर्तुर्गोत्रंकदापिनभवतितस्याइ
तिअशौचेतत्प्रसवमरणयोस्त्रिरात्रमेवहर्तुरिति।शंखः । पितृवेश्मनियानारीरजः पश्यत्यसंस्कृता ।प्रसवेमरणेतज्जमशौचंनोपशाम्यति।
पितुरितिशेषः।इतिरूयशौचं ।अर्थगर्भस्त्रावाशौचं।ब्रह्मपुराणे ।षण्मासाभ्यंतरेयावद्गर्भस्त्रावोभवेद्यदि।तदामाससमैस्तासांदिवसैःशुद्धिरि

ष्यते।अतऊर्ध्वंस्वजात्युक्तमशौचंतासुविद्यते। सद्यःशौचंसपिंडानांगर्भस्यपतनेसति।अत्रदिवसैरितिबहुत्वश्रवणान्मासानांबहुत्वंयतः
प्रभृतिसंभवति। तत्रेयंव्यवस्था। तेनतृतीयमासोपरिषण्मासपर्यंतंयावंतोमासाअतीतास्तावंतिदिनानितासांस्त्रीणांब्राह्मण्यादीनामशौ
चंभवति।सपिंडानांस्वामिपुत्रप्रभृतीनांसद्यःशौचं।मासत्रयाभ्यंतरेविशेषमाह।मरीचिः। गर्भस्रुत्यायथामासमचिरेतूत्तमेत्र्यहं। राजन्ये
तुचतूरात्रंवैश्येपंचाहमेवच। अष्टाहेनतुशूद्रस्यशुद्धिरेषाप्रकीर्तिता।यथामासमिति।यावंतोमासाअतीतास्तावंतिदिनानिव्याप्याशौचं
एतच्चमासत्रयादूर्ध्वंषण्मासंयावत्।मासत्रयाभ्यंतरेत्वाह।अचिरेतूत्तमेत्र्यहमिति।अचिरेमासत्रयाभ्यंतरेगर्भस्रावेसति उत्तमेउत्तमजातीये
ब्राह्मण्यांत्रिरात्रं।क्षत्रियाणांचतूरात्रं वैश्यानांपंचाहं शूद्राणामष्टाहमशौचंभवतीत्यर्थः। कूर्मपुराणे। गर्भच्युतावहोरात्रंसपिंडेसतिनिर्गु
णे। यथेच्छाचरणेज्ञातौत्रिरात्रमितिनिश्चयः।अत्यंतनिर्गुणेइति वेदैकदेशवेदांगस्वाक्रियाशून्येएकाहः।यथेच्छाचरणेसर्वाशित्वसर्वविक्र
यित्वादिसतित्रिरात्रं।एवमेवहारलता। यदपित्रिरात्राशौचंहारीतेनोक्तंजातमृतेमृतजातेवाकुलस्येतितदपियथेच्छाचरणेज्ञातिविषयमेव
एवमेवरत्नाकरः।जातमृतइतिजन्मानंतरमव्यवहितकालमृतइत्यर्थः।तदूर्ध्वंजातमरणेसर्वेषामेवसपिंडानांसद्यःशौचं।एवंचगर्भस्रावेसपिं
डानांगुणवतांसद्यःशौचंतदेषसमुदायार्थः। गर्भस्रावेमासत्रयाभ्यंतरेब्राह्मण्यास्त्रिरात्रं मासत्रयोपरिषण्मासंयावत्॥ यावत्सुमासेष्वती
तेषुगर्भस्रावोभवतितावंत्येवदिनान्यशौचं। षण्मासोपरिदशाहमशौचंभवति। पतिपुत्रादिसपिंडानांसद्यःशौचंभवति। क्षत्रियायामास
त्रयाभ्यंतरेदिनचतुष्टयं। वैश्यायाः पंचाहं। तदुपरिषण्मासंयावत्। उभयोरपिअतीतमाससमसंख्यानिदिनानि। तदुपरिस्वजात्यु
क्तंद्वादशाहंचदशाहंवाशौचाशौचंभवति। शूद्रायामासत्रयंयावदष्टाहं।ततःषण्मासंयावदतीतमाससमसंख्यानिदिनानि।तदुपरिमासम

शौचंभवति।अत्रसर्वत्रानिर्गुणसपिंडानामेकाहं।यथेच्छाचरणानांसपिंडानांअहाशौचंविज्ञेयं।अथमृत्युविशेषाशौचंप्रारभ्यते।वृद्धगार्ग्यः।
वृद्धः शौचंस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।आत्मानंघातयेद्यस्तुभृग्वग्न्यनशनांबुभिः।तस्यत्रिरात्रमशौचंद्वितीयेन्वस्थिसंचयः।तृती
येतूदकंकृत्वाचतुर्थेश्राद्धमाचरेत्। अत्रशौचतोलुप्तइतियोवृद्धोमूत्रोच्चारादिशौचंकर्तुंनशक्नोति ।अनुभूतार्थस्याचिरेणैवस्मृतिशून्यः।
एवंविधोभृगुप्रपातादिभिरात्मानंघातयेत्। भिषजावैद्येनाप्रतिक्रियरोगश्चपुरुषआत्मानंघातयेत्। तत्रात्मघातेदोषाभावः त्रिरात्रशौचा
चरणंतयोःकर्तव्यमित्यर्थः। ब्रह्मपुराणे । दुश्चिकित्स्यैर्महारोगैःपीडितस्तुपुमानपि । प्रविशेज्ज्वलनंदीप्तंकरोत्यनशनंतथा । अगा
धतोयराशिंचभृगोः पतनमेवच । भृगोःपर्वतादित्यर्थः । गच्छेन्महापथंवापितुषारगिरिमादरात् । प्रयागवटशाखाग्राद्देहत्यागंकरो
तियः। स्वयंदेहविनाशेतुप्राप्तेकालेमहामतिः।उत्तमान्प्राप्नुयाल्लोकान्नात्मघातोभवेत्क्वचित् । महापापक्रियःस्वर्गेदिव्याँल्लोकान्समश्नुते॥
एतेषामधिकारस्तुतपसांसर्वजंतुषु। नराणारथनारीणांसर्ववर्णेषुसर्वदा । ईदृशंमृतकंयेषांजीवताकुत्रचिद्भवेत्। अशौचंस्यात्र्यहंतेषांव
ज्रानलहतेतथा।महामतिरिरितिस्वयंदेहविनाशेउपस्थिते।अन्यथापिरोगेणसंप्रत्येवमर्तव्यमतःसात्विकतयास्वयमेवैतेषुस्थानेषुदेहंत्यजा
मीतिकृतबुद्धिः । महापापक्रियइति । महापापक्रियोपीत्यर्थः । तेनमहापापक्रियोप्येवंकृतमरणेदिव्याँल्लोकान्समश्नुते । किमुतधार्मि
कइत्यतिशयप्रदर्शनं।एतेषांमरणरूपाणांतपसांसर्ववर्णव्यक्तिसाधारणेऽधिकारः। ईदृशमित्यादेरयमर्थः।एवंविधमरणप्रवृत्तानांदैववशा
त्कालेजीवतांकालांतरेमृतानांत्रिरात्रमेवाशौचं।तत्कालमरणेत्रिरात्रमित्यविवादमेव । वज्रानलहतेतथेतिएतदप्येवंविधेषुप्रायाश्चित्तेषुव
ज्रानलहतेषुत्रिरात्रमितिदर्शयति। प्रायश्चित्तइतितुकश्यपवाक्यैकवाक्यतयालभ्यते।अंगिराः। व्यापादयेदथात्मानंस्वयंयोग्न्युदकादि

ना । विहितंतस्यनाशौचंनाग्निर्नाप्युदकक्रिया । यस्तुरोषादिनाहेतुनाअग्न्यादिभिरात्मानंघातयतितस्याशौचाग्निदानादिक्रियानकर्त
व्या। अथकश्चित्प्रमादेनाम्रियतेऽग्न्युदकादिषु । तस्याशौचंविधातव्यंकार्याचास्योदकक्रिया।प्रमादेनानवधानेनाग्न्युदकवज्राद्यपमृत्युहेतु
भिर्म्रियतेतस्यसंपूर्णमशौचंकर्त्तव्यं । संकोचेप्रमाणाभावात्उदकक्रियाकर्त्तव्या। अग्निसंस्कारोदकदानादिकाःकर्त्तव्याइत्यर्थः। उदक
क्रियेत्यस्योपलक्षकत्वात्।तदेवमत्रसमुदायार्थः।शौचाचमनाद्यसमर्थस्यवृद्धस्य असाध्यव्याधिगृहीतस्य चपुरुषस्यमरणेच्छायामग्निज
लप्रवेशेनमरणेसपिंडानांत्रिरात्रमशौचं।तत्कालेअग्न्यादिप्रवेशेपिअमृतानांपश्चान्मृतानांत्रिरात्रमशौचं ।रोषादिनायेजलादिष्वात्मानंघा
तयंतितेषामग्निदाहादिकंनकर्त्तव्यं।तन्मरणनिमित्तकमशौचमपिनकर्त्तव्यं। प्रमादेनाग्न्युदकवज्रादिनामरणे संपूर्णमशौचमग्निसंस्कारा
दिकाश्चक्रियाःकर्तव्याः। सद्यःशौचानुवृत्तौयमः। डिंबाहवहतानांचविद्युतापार्थिवेनच । गोब्राह्मणस्यचैवार्थेयस्यचेच्छतिपार्थिवः ।
डिंबः शस्त्रंविनाकलहः । संमर्दोवा आहवः संग्रामः । विद्युतावज्रानलेन। इदंचवज्रानलमरणेसद्यःशौचाभिधानं मरणांति
केप्रायश्चित्तेप्रवृत्तस्यमरणेज्ञेयं । पार्थिवोराजत्वेनप्रसिद्धोनक्षत्रियएवेतिरत्नाकरः । गोब्राह्मणस्यचैवार्थेयुद्धादन्यत्रापिजल
पंकोद्धारादौमृतानांसद्यःशौचं । यस्यचेच्छतिपार्थिवः। यस्यप्रैष्यस्यस्वकार्यंतयाकदाचित्पृथिवीपतिः सद्यःशौचमिच्छति। आह
वइतियदुक्तंतत्रविशेषमाहुः। उद्यतैराहवेशस्त्रैःक्षत्रधर्महतस्यच।सद्यःसंतिष्ठतेयज्ञःतथाशौचमितिस्मृतम् । सद्यःशौचमितियोजनं।क्षत्र
धर्मोअकातरत्वादिः । शस्त्रैर्विषादिदिग्धैः। यज्ञःपिंडदानादिरूपः । संतिष्ठतेसमाप्तिमेति । सद्यएवेत्यर्थः । पराशरः । ब्राह्मणार्थे
विपन्नानांदंडिनांयोग्रहेषुच। आहवेषुविपन्नानामेकरात्रमशौचकम्।अत्रदंडिनामितित्रिष्वपिसंबध्यते। ततश्चायमर्थः। गोब्राह्मणार्थेगोग्रहे

युद्धेचदंडेनमृतानामेकाहोरात्रमशौचम्।एवमेवहारलता।अत्रदंडिनामित्यत्रबंदिनामितिरत्नाकरेपाठः । बंदिनांचौरादिगृहीतानांत
दशायामेवचरणेएकरात्रमशौचमितिव्याख्यातम्।बृहस्पतिः । डिंबाहवेविद्युताचराज्ञागोविप्रपालने। सद्यःशौचहतस्याहुरुयहंचान्ये
महर्षयः । अत्रशस्त्रैरभिमुखहतस्यसद्यःशौचम । लगुडादिनापरंमुखहतस्यत्रिरात्रमितिव्यवस्थितविकल्पार्थश्चकारः। यमः ।
डिंबाशनिहतानांचतथैवप्राणसत्रिणाम् । नदीश्वापददंष्ट्रिभ्यःसद्यःशौचंविधीयते । प्राणसत्रिणामितिपरार्थेप्राणत्यागिनामित्यर्थः ।
नदीतिजलाशयोपलक्षणम्। श्वापदानखायुधास्तरक्षुऋक्षादयःदंष्ट्रिनोदशनायुधाःसर्पवराहादयः। एतन्नद्यादिमरणेसद्यःशौचं । मर
णांतिकेप्रायश्चित्तेकाम्येचत्रिवेणीसंगमादौमरणेसद्यःशौचानुवृत्तौशंखलिखितौ । अथशस्त्रानाशकाग्निरज्जुभृगुजलप्रमापणेष्वेवमे
व । अनाशकमभोजनम् । एतदपिसद्यःशौचंकाम्येप्रयागादौशस्त्रादिनामरणेप्रायश्चित्तेमरणांतकेज्ञेयम्। तदयंसद्यःशौचादिबोधकसम
स्ताखंडलकार्थः । संमर्दहतानांशस्त्रशून्यकलहमृतानांराज्ञाहतानांगोब्राह्मणार्थजलपंकादिमग्नानांसंग्रामेशस्त्रसंमुखहतानांमरणांति
केकाम्येकर्मणिप्रयागादौप्रायाश्चित्तेचशस्त्रजलाग्निश्वापदादिभिर्मृतानांचसद्यःशौचम् । सकलस्यापिराजाज्ञयासद्यःशौचम्।ब्राह्मणार्थे
चगवार्थेचदंडेनविपन्नानांसंग्रामेचदंडेनविपन्नानांबंदीकृतानांमृतानामेकाहोरात्रमशौचं । लगुडसंग्रामेपराङ्मुखहतस्यत्रिरात्रमशौचं ।
पराशरः । उपसर्गेमृतेचैवसद्यःशौचंविधीयते।एतच्चप्रचुरोपसर्गोपद्रवसन्नियतविषयमितिभाति । उपसर्गमरणसंपूर्णाशौचस्याप्रामाणि
कव्यवहारविषयत्वात् । तथाच । आपद्यपिचकष्टायामित्यत्रसद्यःशौचेऽत्यंतदुर्भिक्षेऔपसर्गिकात्यंतमरणादिपीडायांनाशौचमि
तिहारलताकारआहस्म । तथाचदक्षः । स्वस्थेकालेत्विदंसर्वसूतकंपरिकीर्तितम् । आपद्गतस्यसर्वस्यसूतकेपिनसूतकम् ।

यत्तूपसृज्यतइत्युपसर्गइत्यबहिर्भूतोपसर्गमरणेसद्यःशौचंव्रणपाकपरंपरयामरणेसंपूर्णाशौचमिति । व्याख्यातंकैश्चित् । तन्मतेऽबहि
र्भावेउपसर्गस्याज्ञानमबहिर्भावेचव्रणपाकपूर्वावस्थायांमरणेऽनध्यवसायएवस्यादितितद्विभावनीयम् । अथसपिंडाद्यशौचम् । तत्रबृह
स्पतिः।दशाहेनसपिंडास्तुशुध्यंतिप्रेतसूतके।त्रिरात्रेणसकुल्यास्तुस्नात्वाशुध्यंतिगोत्रजाः।सापिंडाःसप्तपुरुषावधयः।स्ववंश्याःसकुल्या
दशपुरुषावधयः । तदूर्ध्वंगोत्रजाः । प्रेतसूतकेप्रेतेसूतकेचेत्यर्थः।मनुः।गुरोःप्रेतस्याशिष्यस्तुपितृमेधंसमाचरेत्।प्रेतहारैःसमंतत्रदश
रात्रेणशुध्यति । अस्यार्थः । यःशिष्योवेदाध्येतागुरुकुलेतिष्ठन्गुरोःसंस्कारंकरोति।सदशरात्रेणशुध्यति ।गुरुलक्षणमाह । अल्पंवाबहु
वायस्यश्रुतस्योपकरोतियः । तमपीहगुरुंविद्यादिति।श्रुतस्याध्ययनंतस्यवेदविषयस्योपकरोतीत्यर्थः।त्र्यहमित्यनुवृत्तौगौतमः।आचा
र्यतत्पुत्रस्त्रीयाज्यशिष्येषुचैवमिति । आचार्य्यउपनयनपूर्वकसांगवेदाध्यापकस्तस्मिन्तत्पुत्रेचमृतेतत्पत्न्यांचमृतायांशिष्यत्रिरात्रम
शौचं ।ज्योतिष्टोमादियागंकुर्वतोयस्यसर्वदाआर्त्विज्यंक्रियतेसयाज्यःतस्मिन्मृतेसातिऋत्विजांत्रिरात्रमशौचंशिष्यस्योपनीयसांगवेदम
ध्यापितस्तस्यगुरुकुलस्थितस्यैवमरणेआचार्य्यस्यात्रिरात्रमशौचम् ।मनुः । त्रिरात्रमाहुराशौचमाचार्य्येसंस्थितेसति । तस्यपुत्रेचप
त्न्याचदिवारात्रमितिस्थितम् । दिवारात्रमहोरात्रामित्यर्थः । एतच्चाहोरात्रंशौचंशिष्यस्यानिवृत्ताध्ययनस्याचार्य्यपत्नीपुत्रयोरपिमरणे
ज्ञेयम्।अधीयानस्यतुतयोरपिमरणेत्रिरात्रंगौतमोक्तं।बृहस्पतिः । त्र्यहंमातामहाचार्य्यश्रोत्रियेष्वशुचिर्नरः। मातुलेपक्षिणीरात्रिःशिष्य
र्त्विग्बांधवेषुच । अश्रोत्रियेत्वहःकृत्स्नमनूचानेतथागुरौ। मृतेराजनिसज्योतिर्यस्यस्याद्विषयेस्थितिः ॥ श्रोत्रियएकशाखाध्येता । ए
कांशाखामधीत्यश्रोत्रियइतिबौधायनवचनात् । तस्मिन्स्वगृहेमृतेस्वगृहपतेस्त्रिरात्रमशौचम् ।तथांगिराः । गृहेयस्यमृतः कश्चिदसपिं

डः कथंचन। तस्याप्यशौचंविज्ञेयंत्रिरात्रमितिनिश्चयः । अत्रासपिंडः श्रोत्रियः अश्रोत्रियेत्वसपिंडेस्ववेश्मनिमृतेएकाहोरात्रम्।तथाचैक
रात्रमित्यनुवृत्तौ विष्णुः । असपिंडेस्ववेश्मनिमृतइति अत्रासपिण्डोऽश्रोत्रियः । मातुलेपक्षिणीति मातुः सहोदरेभ्रातरि शिष्ये
पिगुरुकुलान्निवृत्ताध्ययनेमृतेपक्षिणीतिकृत्वाउपनीयवेदैकदेशमध्यापितेऽनुपनीयसंपूर्णवेदमध्यापितेचस्वगृहेमृतेशिष्येचाचार्यस्यप
क्षिणीऋत्विजिमृतेयजमानस्यपक्षिणीबांधवोमातृष्वस्रेयादिरग्रेवक्ष्यतेतन्मरणेपिपक्षिणीपक्षिणीतुपूर्वापरादिनसहितोरात्रिपूर्वापररात्रि
सहितंदिनंवा।अश्रोत्रियइत्यादि।अश्रोत्रियेचस्वगृहेमृतेऽहः कृत्स्नमहोरात्रंव्याप्यअनूचानः सांगवेदाध्येता तस्मिन्नेकग्रामेमृतेगुरौअल्पा
ध्यापकेमृतेएकमहोरात्रं।एवमेवहारलता ।मृतेराजनिस्वतंत्रेतद्देशाधिपेसज्योतिः ।दिवामरणेदिनमात्रंरात्रौमरणेरात्रिमात्रमशौचंप्रजाना
मित्यर्थः । गौतमः । पक्षिणीमसपिंडेयोनिसंबन्धेसहाध्यापिनि असपिंडेसमानोदके दशमपुरुषादूर्ध्वंज्ञायमानजन्मनामिकेमृतेपक्षिणी।
सहाध्यायिनिचएकस्माद्गुरोःसहवेदमधीयानएवविनष्टेपक्षिणी ।अन्यत्रैकाहः।योनिसंबंधेमृतेपक्षिणी । योनिसंबंधाश्चमातृष्वसृपितृष्वसृ
मातुलमातुलानीमातुलपुत्रमातृष्वस्रेयपैतृष्वस्रेयदौहित्रभगिनीभागिनेयाःश्वश्रूःश्वशुरौच तथाचयमइत्यनुवर्त्यमिताक्षराकारः।श्वशुर
योश्चभगिन्यांचमातुलान्यांचमातुले।पित्रोःस्वसरितद्वच्चपक्षिणींक्षपयेन्निशाम्।तथा मातुलेश्वशुरेमित्रेगुरौगुर्वङ्गनासुच।अशौचंपक्षिणी
रात्रिर्मृतामातामहीयदि । तथा । संस्थितेपक्षिणींरात्रिंदौहित्रेभगिनीसुते । अत्रश्वश्रूश्वशुरमरणेपक्षिण्यशौचंनिर्गुणजामातृविषयंमित्रे
चस्वगृहेमृतेपक्षिणी।गुरुरत्रउपनीय किंचिद्वेदाध्यापकः । अनुपनीयैकशाखाध्यापकश्चतादृशगुरोःपत्नीगुर्वङ्गनातयोर्मृतयोःपक्षिणी।
जाबालः । समानोदकानांत्र्यहंगोत्रजानामहः स्मृतं ।मातृबंधौगुरौमित्रेमंडलाधिपतौतथा । गुरुर्वात्रवेदांगाध्यापकः । मातृबांधवाः

परिभाषिताः । मातुःपितृष्वसुः पुत्रामातुर्मातुःस्वसुः सुताः।मातुर्मातुलपुत्राश्चविज्ञेयामातृबांधवाः॥ तेषुमृतेष्वेकाहः । मंडलाधिपतौ राजनिमृतेएकाहः।बौधायनः । त्रिरात्रमहोरात्रमेकरात्रमितिकुर्वीत । आचार्योपाध्यायतत्पुत्रेषुत्रिरात्रमृत्विजामपि । शिष्यसतीर्थ सब्रह्मचारिषुत्रिरात्रमेकरात्रमितिकुर्वीत ।यथासंख्यमन्वयः । उपाध्यायोऽत्रयत्किंचिदध्यापकः। ऋत्विजांचेतिसप्तम्यर्थेषष्ठी।ऋत्विक्षु मृतेष्वित्यर्थः । एतच्चयजमानगृहएवमृतेषुत्रिरात्रंयजमानस्यज्ञेयम् । शिष्येपिगुरुकुलमृतेत्रिरात्रं । सतीर्थः समानगुरुकः । सब्रह्मचारीसमानाचार्य्यः । एकरात्रपदमुभयत्रदिनमात्रंरात्रिमात्रंचालक्षयाति । शुध्येदित्यनुवृत्तौविष्णुः । आचार्य्येमा तामहेऽतीतेत्रिरात्रेण । अनौरसेषुपुत्रेषुजातेषुचमृतेषुच । परपूर्वासुभार्यासुसूतासुचमृतासुच ॥ आचार्य्यपत्नीपुत्रोपाध्यायमातुलश्व शुरश्वश्रूश्वाशुर्यसहाध्यायिशिष्येषुचैकरात्रेणस्वदेशराजनिच । अनौरसेषुऔरसंवर्ज्जयित्वाएकादशविधपुत्रेषुजातेषुमृतेषुचत्रिरात्रं। परपूर्वासुपूर्वपरिगृहीतासुभार्यासुत्रिरात्रं । अत्रयद्यपिइदंत्रिरात्राभिधानंत्रैवर्णिकविषयमितिरत्नाकरशुद्धिविश्वयोर्व्याख्यानंतथापिवि शेषानभिधानात्सर्ववर्णविषयतयासर्वप्रामाणिकानुमतत्वाच्चातुर्वर्ण्यतासाधारणमेवविज्ञेयं।हारलतादिष्वपिविशेषोनोक्तः । आचार्य्य शब्दःपत्नीपुत्रयोर्विशेषणम् । उपाध्यायोयत्किंचिदध्यापकः । मातुलादयःप्रसिद्धाः।सहाध्यायीवेदैकदेशसहाध्येतासंपूर्णवेदेसहा ध्यायिनिवृत्ताध्ययनश्च । शिष्योऽन्योपनीतोवेदंसांगमध्यापितः । स्वदेशराजःस्वकर्मस्थः । एतेषुमृतेषुएकरात्रं मातुलोऽत्र मातृवैमात्रेयः । मातुःसोदरेपक्षिणी । मातुलादिषुस्वगृहमृतेषुत्रिरात्रं । तथाचप्रचेताः । मातृष्वसृमातुलयोःश्वश्रूश्वशुरयोर्गुरोरृत्क्

त्विजिचोपरतेत्रिरात्रम् । याज्ञवल्क्यः । अनौरसेषुपुत्रेषुभार्यास्वन्यगतासुच । निवासराजनिप्रेतेतदहःशुद्धिकारणम् ॥ अनौरसाःपुत्राःअसवर्णाः भार्याश्चासवर्णाःसवर्णेषुपुत्रेषुसवर्णभार्यासुचत्रिरात्रम् । तथाचशंखः । अनौरसेषुपुत्रेषुभार्यास्वन्यगतास्वपि । परपूर्वासुचस्त्रीषुत्रिरात्राच्छुद्धिरिष्यते ॥ अत्रभार्यास्वन्यगतासुत्रिरात्रंसजातीयोत्कृष्टजातीयपुरुषांतरगासुमृतासुप्रसूतासुच विज्ञेयं । अपकृष्टजातीयगमनेमहापातकित्वादशौचाभावादितिहारलता । एवमेवमिताक्षरापि । तथाचशंखलिखितौ । अन्यपूर्वासुभार्यासुकृतकेषुसुतेषुच । नानध्यायोनोदकक्रिया । अत्रअन्यपूर्वाभार्यासतीपुनरधमजातीयगाकृतकःपुत्रोऽशास्त्रीयःकल्पितस्तयोर्मृतयोर्नाशौचंनोदकक्रियाइतिरत्नाकरः । ब्रह्मपुराणे । आदावन्यस्यदत्तायांकुत्रचित्पुत्रयोर्द्वयोः । पितुर्यत्रत्रिरात्रंस्यादेकंतत्रसपिंडनम् ॥ एकामाताद्वयोर्यत्रपितरौद्वौचकुत्रचित् । तयोःस्यात्सूतिकादैक्यंमृतकाद्वापरस्परम् अस्यार्थः । आदौप्रथममन्येनविवाहितातेनैवजनितपुत्रायदाअन्यमाश्रितातेनापिजनितपुत्राभवतितदाद्वयोरपिपुत्रयोर्मरणेप्रसवेचाद्वितीयपितुस्त्रिरात्रम् । एवंविधेचविषयेतत्सपिंडानामेकरात्रम् ।एकामाताइत्यादि एकमातृकभिन्नपितृकयोःपुत्रयोर्मध्येएकस्यप्रसवेमरणेचेतरस्यमातृजात्युक्तमशौचम्।परपूर्वास्वन्यगतासुचभार्यासुअनौरसेषुपुत्रेषुचयत्प्रातियोगिकभार्यात्वंयत्प्रातियोगिकंपुत्रत्वंतस्यैवत्र्यहाशौचम् ।भार्यापुत्रशब्दयोःसंबंधिशब्दत्वात्सपिंडानांत्वशौचाभावः।अतएवमिताक्षरायांप्रजापतिः । अन्याश्रितेषुदारेषुपरपत्नीसुतेषुच।गोत्रिणःस्नानशुद्धाःस्युस्त्रिरात्रेणैवतात्पिता॥तदयंसमस्तप्रकरणार्थः।सपिंडमरणेदशरात्रम् ।अष्टमपुरुषादारभ्यदशमपुरुषंयावत्सकुल्यमरणेत्रिरात्रंतदूर्ध्वंज्ञायमाननामजन्मपरंपराकेज्ञातिमरणेपक्षिणी।अज्ञायमाननामजन्मपरंपराकेअस्मद्गोत्रजइत्येवमाकारमात्रज्ञानगोचरमृतेस्नानमात्रं।आचा

र्य्यमरणेतत्संस्कारकर्तुःशिष्यस्यदशरात्रं । यदिसंस्कारंनकरोतितदाशिष्यस्यत्रिरात्रम् । आचार्य्यपत्नीमरणेआचार्य्यपुत्रमरणेचगु
रुकुलस्थितस्यशिष्यस्यत्रिरात्रम् । गृहस्थितशिष्यस्यतयोर्मरणेएकरात्रम् । उपनीयकिंचिद्वेदाध्यापकेऽनुपनीयसंपूर्णवेदाध्यापकेचगु
रौमृतेपक्षिणी। तथाविधगुरुपत्न्यांचमृतायांपक्षिणी ।यत्किंचिदध्यापकेउपाध्यायेमृतेएकरात्रं । उपाध्यायपत्न्यांचमृतायामेकरात्रम् ।
उपाध्यायपुत्रेचमृतेएकंदिनमात्रंरात्रिमात्रंवा । आचार्य्यगृहस्थितशिष्यमरणेआचार्यस्यत्रिरात्रम्। उपनीयवेदैकदेशमध्यापितस्यानु
पनीयसंपूर्णशाखामध्यापितस्यएकाहोरात्रं । वेदसहाध्यायिनिमृतेइतरस्यपक्षिणी । यत्किंचित्पाठसहाध्यायिनिमृतेएकरात्रं समानब्र
ह्मचर्य्यैएकस्मादधीयानेमृतेइतरस्यएकरात्रंसमानब्रह्मचर्यैभिन्नाद्गुरोरधीयानेऽपरस्यएकदिनमात्रंरात्रिमात्रंवा । संनिधिवासिनिमित्रे
स्वगृहमृतेगृहस्थस्यात्रिरात्रं । अन्यस्मिन्मित्रेस्वगृहमृतेपक्षिणी। अन्यत्रमृतेमित्रेएकरात्रं। श्रोत्रियेस्वगृहमृतेगृहस्थस्यत्रिरात्रं।अश्रोत्रि
येस्वगृहमृतेएकरात्रं । एकग्रामेश्रोत्रियेमृतेग्रामवासिनामेकरात्रं । यजमानस्यस्वगृहेमृते ऋत्विजित्रिरात्रं । अन्यत्रमृतेएकरात्रं ।
सदायाज्येयजमानेमृतेयाजकस्यत्रिरात्रं। मातामहेमृतेदौहित्रस्यत्रिरात्रं मातामह्यांमृतायांपक्षिणी । मातुलेमातृष्वस्रेयेमातुलपुत्रेदौहि
त्रेभागिनेयेचमृतेपक्षिणी । भगिन्यांमातुलान्यांमातृष्वसरिचमृतायांपक्षिणी । मातुलेवैमात्रेयेमातुःपैतृष्वस्रेयेमातुर्मातृष्वस्रेयेमातुर्मा
तुलपुत्रेश्वशुरेश्वश्र्वांश्यालकेचमृतेएकरात्रं । निर्गुणजामातुः श्वश्रूश्वशुरमरणेपक्षिणी । स्वगृहमृतेमातुलेश्वशुरेगुरौ स्वगृहमृतायां
मातृष्वसरिचत्रिरात्रं । स्वतंत्रेराजनिस्वकर्मस्थेमृतेएकाहोरात्रंप्रजानां । अस्वकर्मस्थेराजनिमृतेएकंदिनमात्रंरात्रिमात्रंवा। क्षेत्रजादि
ष्वेकादशपुत्रेषुजातेषुमृतेषुचमातापित्रोस्त्रिरात्रं ।क्षेत्रजादीनामपिमातापितृमरणेत्रिरात्रं । परपूर्वासुअन्यगतासुचभार्यासुमृतासुप्रसूता

सुचत्रिरात्रं । एकमातृकयोर्भिन्नपितृकयोर्भ्रात्रोःपरस्परंजननमरणयोः स्वमातृजात्युक्तसंपूर्णाशौचंतयोर्मरणेप्रसवेचापितुस्त्रिरात्रं । त
त्सपिंडानांतयोर्मरणेएकरात्रमशौचंभवति । हीनवर्णगामिनीषुभार्यासुत्वशौचाभावः । अथनिर्हाराद्यशौचं । अंगिराः । यःकश्चिन्निर्हरे
त्प्रेतमसपिंडः कथंचन॥स्नात्वासचैलःस्पष्ट्वाग्निंतस्मिन्नेवाह्निशुध्याति॥निर्हरेद्वहिर्नयेत्।इदंचधर्मबुद्ध्यानाथप्रेतवहनेशौचं । पराशरः ।
अनाथंब्राह्मणंप्रेतंयेहरंतिद्विजातयः । पदेपदेयज्ञफलमानुपूर्व्याल्लभंतिते। नतेषामशुभंकिंचित्पापंवाशुभकर्मणां । जलावगाहनात्तेषांस
द्यःशौचंविधीयते । प्रेतसंस्पर्शसंस्कारैर्ब्राह्मणोनैवदुष्यति । वोढाचाप्यग्निदाताचसद्यःस्नात्वाशुचिर्भवेत् । संस्कारोऽत्रप्रेतप्रसा
धनं । आग्निदानस्यपृथगुपादानात् । पैठीनसिः । असंबंधिद्विजान्वहित्वाचसद्यःशौचं । संबंधेत्रिरात्रं सद्यःशौचंधर्मबुद्ध्यादाहा
दौ संबंधेसतित्रिरात्रं।मातुलमातृष्वस्रेयादीनांयेषांमरणेअशौचत्वमुक्तंतेषांदाहादौत्रिरात्रमशौचं । तंचमातुलादयोव्यवस्थायांलिखति
मनुः । अनुगम्येच्छयाप्रेतंज्ञातिमज्ञातिमेवच ।स्नात्वासचैलःस्पृष्ट्वाग्निंघृतंप्राश्यविशुध्याति॥ज्ञात्यनुगमनेआग्निस्पर्शघृतप्राशनमात्रमाधि
कंविधीयते। अशौचंतुयथोक्तमेव।कूर्मपुराणे। असपिंडंद्विजंप्रेतंविप्रोनिर्हृत्यबंधुवत् । अशित्वाचसहोषित्वादशरात्रेणशुध्याति॥यद्यत्रप्र
तितेषांतुत्रिरात्रेणततःशुचिः । अनदन्नन्नमन्हैवनचेत्तस्मिन्गृहेवसेत्॥सोदरेष्वेतदेवस्यान्मातुराप्तेषुबंधुषु। निर्हृत्येतिनिर्हाराद्युपलक्षणं
वाक्यांतरेवहनादावपितुल्याशौचविधानात् । गृहवासाभावेतदन्नभोजनेयथात्रिरात्रंतथान्नभोजनाभावेतद्गृहवासेपित्रिरात्रंतुल्यन्या
यात् । एतच्चसर्वंनिर्हरणाद्यशौचंब्राह्मणनिर्हरणादौब्राह्मणस्यैव । अन्यत्रविशेषोवक्ष्यते । कूर्मपुराणे । यस्तैःसहाशनंकुर्याच्छ
यनादीनिचैवहि।बांधवोवापरोवापिसदशाहेनशुध्याति॥आदिपदमालिंगनांगसंवाहनादिपरं॥दशाहपदमुपलक्षणं॥तदशौचापगमेनशुध्य

तीत्यर्थः । तथायस्तेषामन्नमश्नातिसकृदेवापिकामतः । तदशौचेनिवृत्तेसौस्नानंकृत्वाविशुध्याति॥तेषांब्राह्मणादीनामशौचेयः सकृदपि
कामतोबुद्धिपूर्वमश्नातिसयज्जातीयाशौचान्नंभुंक्तेसतज्जातीयाशौचापगमेशुध्यति।शेषेचस्नानं।प्रमादतस्तुभोजनेकृतेनदोषः । दुर्भिक्षबु
द्धिपूर्वकेभोजनेविशेषमाह। यावत्तदन्नमश्नातिदुर्भिक्षोपहतोनरः । तावंत्यहान्यशौचंस्यात्प्रायश्चित्तंततश्चरेत् ॥ प्रायश्चित्तंचात्रत्रिरा
त्रंदुग्धपानमात्ररूपं । तथाचांगिराः । ब्रह्मक्षत्रविशांभुक्त्वानदोषोस्त्यग्निहोत्रिणां ॥ सूतकेशावआशौचेचास्थिसंचयनात्परां ॥
अत्रसन्नप्रवृत्तानामा।मन्नमगर्हितं । भुक्त्वापक्त्वान्नमेतेषांत्रिरात्रंतुपयःपिबेत् । ब्राह्मणादीनांत्रयाणामग्निहोत्रिणांसूतकेसिद्धान्नभोजने
दोषाभावः । मरणाशौचेत्वस्थिसंचयानंतरंतात्सिद्धान्नेभोजनेदोषाभावः । अनग्नीनामन्नसत्रप्रवृत्तानांनियमपूर्वकंप्रात्यहिकान्नदा
यकानामामान्नेदोषाभावः । सिद्धान्नेतुभुक्तेदोषएव । तत्रत्रिरात्रंदुग्धमात्रपानंप्रायश्चित्तं । पयःपदंदुग्धपरमितिहारलता । अशौचंतुत
त्ज्जात्युक्तमेवाशौचान्नभोजनेवाक्यांतरोक्तं । कूर्मपुराणे । दशाहेनशवस्पर्शोऽसपिंडस्तुविशुध्यति । यदिनिर्दहतिप्रेतंप्रलोभाक्रां
तचेतनः । दशाहेनद्विजः शुध्येद्वादशाहेनभूमिपः । अर्द्धमासेनवैश्यस्तुशूद्रोमासेनशुध्याति ॥ यद्वात्रेणाथवाशुद्धिस्त्रिरात्रेणाथवा
पुनः ॥ अत्रचषड्रात्रमशौचमापत्कालेमूलेनदाहेकृतेअत्यंतापत्कालेदाहेकृतेत्रिरात्रमितिविभागः । मनुः । अवरश्चेद्वरंवर्णमवरंवाव
रोयदि । अशौचेसंस्पृशेत्स्नेहात्तस्याशौचेनशुध्यति ॥ अवरोहीनजातिः । वरः उत्कृष्टजातिः । सयदिस्पृशेद्दहनार्थंतस्यशवस्य
यज्जातीयः शवस्तज्जात्युक्तेनाशौचेनाशौचकालेनशुद्ध्यतीत्यर्थः । पराशरः । प्रेतीभूतंतुयः शूद्रंब्राह्मणोज्ञानदुर्बलः । अनुगच्छेन्नी
यमानंत्रिरात्रमशुचिर्भवेत् ॥ याज्ञवल्क्यः । ब्राह्मणेनानुगंतव्योनतुशूद्रःकथंचन । अनुगम्यांभसिस्नात्वाऽग्निंस्पृष्ट्वाघृतभुक्छुचिः ॥

इदंचसर्वथाशूद्रानुगमनानिषेधेसति । यदितुकार्यांतरेणापिशवशूद्रानुगमनमवर्जनीयंभवतितदास्नानादिनाशुद्धिः । ब्रह्मपुराणे ।
योसवर्णंतुमूल्येननीत्वाचैवदहेन्नरः । अशौचंतुभवेत्तस्यप्रेतजातिसमंनृप ॥ सर्वेवर्णाः सजातीयंदग्ध्वात्र्यहमशौचिनः । भवंति
परजातीयंनिर्दह्यपरजातिवत् ॥ सर्ववर्णानांस्वजातीयदाहेयदिदंत्रिरात्रंतत्स्नेहेनकृते तदन्नभोजनतद्गृहवासयोरेकंयः करोतितत्परं
च । तथा । आचार्य्यंचाप्युपाध्यायंगुरुंवापितरंचवा । मातरंवास्वयंदग्ध्वाव्रतस्थस्तत्रभोजनं ॥ कृत्वापततिनोतस्मात्प्रेतान्नं
तत्रभक्षयेत् । अन्यत्रभोजनंकुर्यान्नचतैः सहसंवसेत् ॥ एकाहमशुचिर्भूत्वाद्वितीयेहनिशुध्यति ॥ व्रतस्थोब्रह्मचारी । आचा
र्य्यादिकंस्वयंदग्ध्वातद्गृहेभोजनंकृत्वापततिव्रतानाधिकारीभवतितस्मात्तत्रगृहेन्नंनभक्षयेत् । तथा । दाहयित्वातुमूल्येनगुरुंप्रेतंभ
वेत्ततः । अशौचंदशरात्रंतुशिष्यस्येतिविनिश्चयः ॥ वेतनदानेनपरद्वारायदागुर्वादिकंदाहयेत्तदाशिष्यस्यदशरात्रमन्यथाऽन्यदेवेत्य
र्थः । तथा । ब्राह्मणोनदहेच्छूद्रंमित्रंवाप्यन्यमेववा । मोहाद्दग्ध्वाततःस्नात्वास्पृष्ट्वाऽग्निंप्राशयेद्घृतम्॥उपवासरतःपश्चात्त्रिरात्रेणविशु
ध्यति । सर्वेषांस्यादहोरात्रंसवर्णानुगमनादपि ॥ शवस्पर्शविधानोक्तंविहितंसार्ववर्णिकं ॥ अत्रब्राह्मणस्यशूद्रदाहेयत्त्रिरात्रमुक्तंतत्पुत्र
भ्रात्रादिरूपस्यशूद्रस्यदाहेद्रष्टव्यं । संबंधरहितशूद्रदाहेयत्तदशौचतुल्यमेवाशौचंब्राह्मणवर्जंसर्वेषांसवर्णाऽनुगमनेऽहोरात्रंशवस्पर्शविधा
नोक्तमिति प्रकरणार्थोपसंहारः । तदियमत्रव्यवस्था । ब्राह्मणस्यधर्मबुद्ध्यानाथमृतब्राह्मणोद्वहनेतथाविधब्राह्मणादाहेचस्नानमात्रे
णशुद्धिः । तथाविधमृतब्राह्मणानुगमनेस्नानानंतरमग्निस्पर्शनघृतप्राशनेकृत्वाशुद्धिः । यदिघृतप्राशनंनभवतितदातमहोरात्रंव्याप्या
शुद्धिः । उदासीनस्यस्नेहेनदाहादौकृतेएकरात्रमशौचं । मातुलमातृष्वस्रेयपैतृष्वस्रेयमातुलपुत्रमातुलानीमातृष्वसृपितृष्वसृभागि

नीभागिनेयमातामहमातामहीदौहित्रभगिनीपतिजामातृश्वशुरश्वश्रूश्यालकशिष्याचार्य्याचार्य्यपुत्राचार्य्यपत्नीगुरुगुरुपत्नीगुरुपुत्रया
ज्यऋत्विग्मातुर्मातुलमातृष्वस्रेयमातुःपैतृष्वस्रेयमातुर्मातृष्वसृमातुर्मातुलपुत्राणांदाहादौकृतेत्रिरात्रं । दाहादिकृत्वामृतसंबंधिगृहे
योवसतितत्सिद्धान्नंचभुंक्तेतस्यमृतजात्युक्तमशौचं । यस्तन्मृतसंबंधिगृहेवसतितदन्नंनभुंक्तेयोवातदन्नंभुंक्तेतद्गृहेनवसतितस्यात्रिरा
त्रमशौचं।योबुद्धिपूर्वकंयस्याशौचेऽन्नमश्नातितस्यतदशौचसमानमेवाशौचं। शेषेचस्नानं।प्रमादतोशौच्यन्नभोजनेदोषाभावः। दुर्भिक्षे
बुद्धिपूर्वकमपियावदशौचान्नमश्नातितावदेवाशौचं।अशौचापगमानंतरेत्रिरात्रंदुग्धपानरूपंप्रायश्चित्तं । मूल्येनप्रेतदहनवहनयोः कृत
योर्दाह्यजात्युक्तमशौचं। अशौचिभिःसहशयनासनालिंगनांगसंवाहनानिकृत्वातत्तज्जात्युक्ताशौचं। शिष्यस्यगुरूपाध्यायाचार्यदाहेमू
ल्येनपरद्वाराकारितेदशरात्रमशौचं। ब्रह्मचारिणःपित्रादिदाहंकृत्वाएकरात्रं। क्षत्रियाणांचातुर्वर्णानुगमनेऽहोरात्रं। ब्राह्मणस्यक्षत्रियवै
श्यानुगमनेऽहोरात्रं।शूद्रस्यशवानुगमनेत्रिरात्रं । प्रसंगेनशूद्रशवानुगमनेस्नानाग्निस्पर्शघृतप्राशनैःशुद्धिः। पारस्करः। अस्थिसंचय
नादर्वाग्यदिविप्रोऽश्रुपातयेत्। मृतेशूद्रेगृहंगत्वात्रिरात्रेणविशुध्यति ॥ अस्थिसंचयनादूर्ध्वंमासंयावद्द्विजातयः। दिवसेनैवशुध्यंतिवा
ससांक्षालनेनच ॥ स्वजातेर्दिवसेनैवद्व्यहात्क्षत्रियवैश्ययोः । मासंयावदितिशूद्राशौचकालंव्याप्येत्यर्थः। स्वजातेरितिशूद्रस्य। ते
नायमर्थः । शूद्रस्यशूद्रेऽसपिंडेमृते ऽश्रुपातने एकाहः । शूद्रेमृते ऽश्रुपातनेक्षत्रियवैश्ययोर्द्व्यहाच्छुद्धिः। तथा। मृतस्ययावद
स्थीनिब्राह्मणस्यहुतान्यपि।तावद्योबांधवस्तत्ररौतितद्बांधवैःसह॥स्नानात्तस्यभवेच्छुद्धिस्ततस्त्वाचमनंभवेत्। अबांधवोत्रब्राह्मणएव।
ततस्त्वाचमनमितिस्नानानंतरमाचमनंचेत्यर्थः। तथा। अनस्थिसंचयाद्विप्रोरौतिचेत्क्षत्रवैश्ययोः । ततःस्नातःसचैलस्तुद्वितीयेऽन्हि

विशुध्याति ॥सचैलस्नानमन्येषामकृतेप्यस्थिसंचये। कृतेतुकेवलंस्नानंक्षत्रेविट्शूद्रजन्मनां॥अस्थिसंचयनादूर्ध्वमहोरात्रेणशुध्याति।अन
स्थिसंचितेशूद्रेब्राह्मणोरौतिचेज्जडः ॥ ततःस्नातःसचैलस्तुशुध्येत्तुदिवसैस्त्रिभिः ॥ सचैलस्नानमित्यादिनाऽकृतेप्यस्थिसंचयेयद
न्येषांक्षत्रियादीनांशूद्रेमृतेऽश्रुपातनेसचैलंस्नानमुक्तंतत्तद्गृहगमनाभावपक्षेऽन्यथाव्द्यहःक्षत्रविशोः। एकाहःशूद्रस्यपूर्वोक्तः।कूर्मपुराणे।
अस्थिसंचयनादर्वागेकाहंक्षत्रवैश्ययोः। अन्यथाचैवसज्योतिर्ब्राह्मणेस्नानमेवच ॥ इदमेकाहविधानंगुणवत्क्षत्रवैश्ययोः ॥ मृतयोरश्रुपा
तेनेविप्रस्यगुणहीनयोः॥तयोर्मरणेअश्रुपातनेद्वितीयेऽह्निपूर्णेसंध्यापर्यंतेनब्राह्मणःशुध्यति । अस्थिसंचयादित्यादिवाक्येनपूर्वो
क्तेन। अन्यथेतिअस्थिसंचयनेकृतेसज्योतिर्यदिवाऽश्रुपातनंतदादिनांतेनयदिरात्रौतदारात्र्यंतेनशुद्धिरित्यर्थः। शुध्येदित्यनुवृत्तौ वि
ष्णुः।सर्वस्यैवप्रेतस्यबांधवैःसहाश्रुपातेकृतेस्नानेनाकृतेऽस्थिसंचयनेसचैलस्नानेनाचमनेनचविप्रस्यशुद्धिः।इदंतद्गृहगमनाभावपक्षेज्ञेयं।
तदयंप्रकरणार्थः।असपिंडेमृतेब्राह्मणेतद्गृहेगत्वातद्बंधुभिःसहाश्रुपातमस्थिसंचयनात्पूर्वंकृत्वासचैलस्नानेनाचमनेनचशुद्धिर्ब्राह्मणस्य।
अस्थिसंचयनानंतरंस्नानमात्रेण। क्षत्रियेमृतेऽस्थिसंचयनात्पूर्वंरोदनेविप्रस्यव्द्यहेनवैश्येऽपिव्द्यहेन।अस्थिसंचयनादूर्ध्वंक्षत्रियेवैश्येचादिन
मात्रंरात्रिमात्रंवा।शूद्रेमृतेऽस्थिसंचयात्पूर्वंरोदनेविप्रस्यात्रिरात्रं।अस्थिसंचये एकाहोरात्रं।क्षत्रियेवैश्येचमृतेऽस्थिसंचयात्पूर्वंक्षत्रियवैश्य
योरश्रुपातेसचैलस्नानं।अस्थिसंचयानंतरंस्नानमात्रं। शूद्रेमृतेक्षत्रियवैश्ययोरस्थिसंचयनात्पूर्वंव्द्यहेन।तदनंतरंदिनमात्रेणरात्रिमात्रेणवा।
शूद्रेमृतेशूद्रस्याश्रुपातेऽस्थिसंचयनात्पूर्वमेकाहेन।तदनंतरंसचैलस्नानेन । यदितुमृतगृहगमनंकृत्वैवाश्रुपातयतितदासर्वस्मिन्वर्णेसर्व
स्यास्थिसंचयात्पूर्वंसचैलस्नानेन।तदनंतरंस्नानमात्रेणशुद्धिः। इतिनिर्हाराद्यशौचं । अथानशौचिनः। तत्रप्रचेताः।कारवःशिल्पिनो।

वैद्यादासीदासास्तथैवच । राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्तिताः। कारवःशूर्पकार ादयःशिल्पिनश्चित्रकाररजकादयः। वैद्याश्चिकित्सकाः । दासीदासाःकर्मकराः । राजानोभूपतयः। राजसेवकाः। एतेसद्यःशौचाःसद्यस्तत्क्षण ाएवशौचंशुद्धिर्येषांएवंभूताभवंति।एषामशौचंनभवत्येवेत्यर्थः। अस्मिन्प्रकरणेसद्यःशौचशब्देनाशौचाभावएवोक्तइति । शुद्धिविंबरत्नाकरौ । अयंचाशौचाभावः कारुप्रभृतीनांप्रतिनियतएवस्वाशिल्पादौकार्येअस्पृश्यत्वप्रतिषेधरूपोज्ञातव्यः।न तुसर्वेषुदानश्राद्धादिधर्मकृत्येष्वशौचाभावः।तथाचविष्णुः । अशौचंनराज्ञांराजकर्मणिनव्रतिनांव्रतेनसत्रिणांसत्रेनकारूणांस्वकर्मणिनर ाज्ञामाज्ञाकारिणांनदेवप्रतिष्ठाविवाहयोः । पूर्वसंभृतयोः व्रतिनामारब्धव्रतानांसत्रिणांदानेकृतसंकल्पानांदेवप्रतिष्ठाविवाहयोः । पूर्वसंभृतयोः प्रारब्धयोः एवंचकर्मविशेषोअशौचाभावविधेरन्यत्रसंध्यावंदनादिकादृष्टकर्मणिस्वस्वजात्युक्तमेषामशौचमवतिष्ठते । छंदोगपरिशिष्टेकात्यायनः । नत्यजेत्सूतकेकर्मब्रह्मचारीस्वयंक्वचित् । नदीक्षणात्परंयज्ञेनकृच्छ्रादितपश्चरन् । पितर्य्यपिमृतेनैषांदोषोभवतिकर्हिचित् । अशौचंकर्मणोन्तेस्यात्त्र्यहंवाब्रह्मचारिणां । सूतकमितिमृतकस्याप्युपलक्षणं । ब्रह्मचारीसूतकेअशौचेस्वकर्मब्रह्मचर्याश्रमविहितंनत्यजेत् । यज्ञेदीक्षणात्परंदीक्षणीयेष्टेरनंतरमशौचेसतिस्वकंकर्मनत्यजेत् । याज्ञिकः दीक्षणात्पूर्वंत्वशौचे वृत्तेयज्ञेप्यशौचमवतिष्ठतएवेत्यर्थः । तपस्वीकृच्छ्रादितपश्चरन्स्वकंकर्मनत्यजेत् । एतदप्यशौचाभावविधानंतत्तत्कर्मविषयमेवकर्मान्तरेत्वशौचमेव । एषांकर्मणोन्तेब्रह्मचर्य्यदीक्षातपोरूपस्यान्तेअवसानेस्वजात्युक्तमशौचंभवति । ब्रह्मचारिणःपुनःपित्रोरपिमरणेव्रतचर्यावसानेत्र्यहमेवाशौचंभवति । यदाह मनुः । आदिष्टोनोदकंकुर्यादाव्रतस्यसमापनात् । समाप्तेतूदकंकुर्यात्त्रिरात्रमशुचिर्भवेत् ॥ आदिष्टमादेशोगुरोर्मादिवासुषु

प्याइत्यादिकोअस्यास्तीत्यादिष्टींब्रह्मचारी । ब्रह्मपुराणे । गृहीतमधुपर्कस्ययजमानाच्चऋत्विजः । पश्चादशौचेपतितेनभवेदिति
निश्चयः ॥ एवंचमधुपर्कग्रहणात्पूर्वमशौचोपनिपाते अशौचंभवत्येवेत्यर्थः । तथा । गृहीतनियमस्यापिनस्यादन्यस्यकस्य
चित् । निमंत्रितेषुविप्रेषुप्रारब्धेश्राद्धकर्मणि ॥ तथा । नैष्ठिकस्याथवान्यस्यभिक्षार्थंप्रस्थितस्यच । वानप्रस्थस्यवान्यत्रसा
धिकारस्यसर्वदा ॥ प्रतिग्रहाधिकाराच्चनिवृत्तस्यनविद्यते । नैष्ठिकस्यनैष्ठिकब्रह्मचारिणःयावज्जीवब्रह्मचारिणः । अन्यस्यचतुर्था
श्रमिणःअशौचिभिक्षाग्रहणेदोषाभावः । उपकुर्वाणस्यतुब्रह्मचारिणोगृहस्थस्यचाशौचिभिक्षाग्रहणेदोषः । वानप्रस्थस्यअन्यत्रव
नादन्यत्रग्रामेसाधिकारस्यभिक्षाधिकारिणोऽशौचिभिक्षाग्रहणेदोषाभावः । अन्यस्यापिसर्वप्रतिग्रहनिवृत्तस्यभिक्षामात्रवृत्तेरशौ
चिभिक्षाग्रहणेदोषाभावः । जाबालः । ब्रह्मचारिणिभूपेच यतौशिल्पिनिदीक्षिते । यज्ञेविवाहेसत्रेचसूतकंनकदाचन ।
अत्रयतेःसंन्यासिनएवात्यन्तमशौचाभावः । अन्येषांकालविशेषेकार्य्यविशेषेचाशौचाभावोवाक्यान्तरात् । ब्रह्मपुराणे । अपिदातृ
गृहीत्रोश्चसूतकेमृतके तथा । अविज्ञातेनदोषःस्यात्श्राद्धादिषुकदाचन ॥ विज्ञातेभोक्तुरेवस्यात्प्रायश्चित्तादिकंक्रमात् ।
विज्ञातेऽशौचेसतियोभुंक्तेतस्यभोक्तुःप्रायाश्चित्तमित्यर्थः । तथा । भोजनार्द्धेतुसंभुक्तेविप्रैर्दातुर्विपद्यते । यदाकश्चित्तदो
च्छिष्टशेषंत्यक्त्वासमाहिताः ॥ आचम्यपरकीयेनजलेनशुचयोद्विजाः । विप्रैःभोजनार्द्धेसंभुक्तेसतिदातुःकश्चिद्यदिविपद्यतेम्रियेत
तदाभुक्तशेषंत्यक्त्वाद्विजाः परकीयेनजलेनाचम्यशुचयोभवन्तीत्यर्थः । विपत्तेरुपलक्षणतयाप्रसवेप्येवंज्ञेयं । तथा ।
विवाहयज्ञयोर्मध्येसूतकेसतिचांतरा ॥ शेषमन्नंपरैर्द्द्याद्दातॄन्भोक्तॄंश्चनस्पृशेत् ॥ परैर्दद्यादितिविवाहेयज्ञेचप्रवर्त्तमानेमध्ये

सूतकेमृतकेचपतिते शेषमन्नमपरैःपरद्वारादापयेत् । एवंसतिदातॄन् भोक्तॄन्नस्पृशेद्दोषइतिशेषः । तथा । दानेविवाहेयज्ञेचसं
ग्रामेदेशविप्लवे । आपद्यपिचकष्टायांसद्यःशौचंविधीयते॥दानेतुलापुरुषदानादौ॥विवाहेचारब्धेदेशविप्लवेराष्ट्रभङ्गेचाशौचाभावः।संग्रामे
मृतस्यान्येषांसद्यःशौचंभवति। कष्टायामापदिग्रासाभावेनप्राणनाशेसंभाव्यमानेप्रतिग्रहेकर्त्तव्येसूतकंनभवतिइत्यर्थः ।यमः। दैवेभये
समुत्पन्नेप्रधानाङ्गे विनाशिते । पूर्वसंकलिपतेचार्थेतास्मिन्नाशौचमिष्यते॥ दैवेभयेदुर्भिक्षोपसर्गमरणादौजातेप्रधानांगेनृपतौपरचक्रेण
नाशितेराष्ट्रोपप्लवेसत्यशौचंस्वस्वजात्युक्तंनभवतीत्यर्थः । पूर्वसंकलिपतंयत्किंचित्पुष्करिण्यादिधर्मकार्यमशौचात् । पूर्वमारब्धंतत्र
सर्वत्रजननेमरणेसत्यशौचंनभवतीत्यर्थः । अत्रचसमस्तएवप्रकरणेतत्तत्कार्यविशेषेएवाशौचाभावोनसर्वकार्येअशौचाभावइत्यवधात
व्यम् ॥ ॥ इतिरुद्रधरकृतौशुद्धिविवेकेजननमरणयोः शुद्धिपरिच्छेदः ॥ ॥ अथाधिकारिणः।तत्रमरीचिः । मृतेपितरिपुत्रेणक्रियाः
कार्याः प्रयत्नतः।बहवःस्युर्यदापुत्राः पितुरेकत्रवासिनः॥सर्वेषान्तुमतंकृत्वाज्येष्ठेनैकेनयत्कृतम् ।द्रव्येणचाविभक्तेनसर्वैरेवकृतंभवेत् ॥
पुत्रेणद्वादशविधपुत्रेण । तत्रापिज्येष्ठस्यप्रशंसा।यदितुतस्यक्षतादिनाऽनधिकारस्तदानियतकालकर्त्तव्येषुप्रेतश्राद्धेषुकनिष्ठस्याप्यधि
कारः । तत्राप्यौरसस्यमुख्यतयाधिकारः। तदभावेपुत्रिकापुत्रस्यतयोरभावेक्षेत्रजादीनामधिकारः।पूर्वपूर्वाभावेउत्तरोत्तराणां।तथाचम
नुः। आज्यंविनायथातैलंसद्भिःप्रतिनिधिः स्मृतः। तथैकादशपुत्रास्तुपुत्रिकौरसयोर्विना । पुत्रलक्षणमग्रेवक्ष्यते। लघुहारीतः ।
सपिण्डीकरणंयावत्प्रेतश्राद्धानिषोडश । पृथक्नैवसुताःकुर्युःपृथग्द्रव्याअपिक्वचित् ॥ छन्दोगपरिशिष्टेकात्यायनः ।
पितामहः पितुःपश्चात्पञ्चत्वं यदिगच्छति । पौत्रेणैकादशाहादिकर्त्तव्यं श्राद्धषोडशम् ॥ नैतत्पौत्रेणकर्त्तव्यंपुत्रवाँश्चेत्पितामहः ।

विष्णुपुराणे । पुत्रः पौत्रः प्रपौत्रोवातद्वद्वाभ्रातृसंततिः।सपिंडसंततिश्चापिक्रियार्हानृपजायते॥एषामभावेसर्वेषांसमानोदकसंततिः।मातृ
पक्षस्यापिण्डेनसंबंधोयोजलेनच॥भ्रातृसंततिरित्यत्रभ्राताचतत्संततिश्चेतिद्रष्टव्यं। मातृपक्षस्यपिंडेनसंबन्धोमातृसपिंडमातृपक्षस्यजले
नसंबंधोमातृपक्षसमानोदकइत्यर्थः।कुलद्वयेपिचोच्छिन्नेस्त्रीभिःकार्याक्रियानृप। संघातांतर्गतैर्वापिकार्याप्रेतस्यसत्क्रिया॥उच्छिन्नबन्धु
रिक्थाद्वाकारयेदवनीपतिः।स्त्रीभिरिति॥यथाविध्यपरिगृहीताभिःसंघातान्तर्गतैरितिविदेशंप्रस्थितानां। सार्थान्तर्गतैरित्यर्थः।उच्छिन्ना
बन्धवोयस्यसउच्छिन्नबन्धुस्तस्यारिक्थात्धनात्।ल्यब्लोपे पंचमी।तेनसर्वबन्धुहीनस्यधनंप्रदायकस्मैचित् तद्वारातदौर्ध्वदैहिकंकारये
दित्यर्थः।तथा।पूर्वाक्रियामध्यमाश्चतथाचैवोत्तराःस्मृताः।त्रिप्रकाराःक्रियाश्चैतास्तासांभेदान्शृणुष्वमे ॥ आदाहाद्वायायुधादिस्पर्शाद्य
न्ताश्चयाःक्रियास्ताःपूर्वामध्यमामासिमास्येकोद्दिष्टसंज्ञकाःप्रेते।पितृत्वमापन्नेसपिण्डीकरणादनु।क्रियन्तेयाःक्रियाःपित्रोःप्रोच्यन्तेतानृ
पोत्तराः।तत्रविभागमाहसएव।पितृमातृसपिण्डैस्तुसमानसलिलैस्तथा ॥सङ्घातांतर्गतैर्वापिराज्ञावाधनहारिणा॥पूर्वाःक्रियास्तुकर्त्तव्याः
पुत्राद्यैरेवचोत्तराः।दौहित्रैर्वानरश्रेष्ठकार्यास्तत्तनयैस्तथा । मृताहनिचकर्त्तव्याःस्त्रीणामप्युत्तराःक्रियाः।प्रतिसंवत्सरंयावदेकोद्दिष्टविधा
नतः॥अत्रपितृमातृसपिंडादयःपूर्वाक्रियांकुर्युर्नोत्तरांमध्यमक्रियांत्वेषामनियमःपुत्राद्याभ्रातृसंततिपर्यन्ताएवोत्तरक्रियायामाधिकारिणः
दौहित्रैरितिपुत्रिकापुत्रविषयकमितिकल्पतरुः।गौतमः।पुत्राभावेसपिण्डामातृसपिण्डाःशिष्यावादद्युः।तदभावेऋत्विगाचार्या । एतच्च
भ्रात्राद्यभावेसतिद्रष्टव्यं।तथाचप्रचेताः।पुत्रोभ्रातापितावापिमातुलोगुरुरेवच।एतेपिंडप्रदाज्ञेयाःसगोत्राश्चैवबान्धवाः ॥ भ्रातेत्यविशेषोप
दानात् कानिष्ठ्यमत्रविवक्षितम्।तनपत्न्यभावेकनिष्ठभ्रातुरधिकारः।तदभावेज्येष्ठस्यतदभावेपितुः।यत्तु।नपुत्रस्यपितादद्यान्नानुजस्य

तथाग्रजः॥ इतिछंदोगपरिशिष्टवचनं तद्भ्रातृसंभवेपितुरनधिकारबोधकंकनिष्ठभ्रातृसद्भावेज्येष्ठभ्रातुरनधिकारबोधकम् । शंखः । पितुः पुत्रेणकर्त्तव्यापिंडदानोदकक्रिया।पुत्राभावेतुपत्नीस्यात्पत्न्यभावेसहोदरः ॥ भार्यापिण्डंपतिर्दद्यात्पत्येभार्यातथैवच । श्वश्र्वादेश्च स्नुषाचैवतदभावेसपिण्डकः॥अपुत्रायाः पत्न्याः पिंडंपतिर्दद्यात्।यत्तु नजायायाःपतिर्दद्यादपुत्रायाअपिक्वचिदितिकात्यायनवचनं॥तदपरिणीतभार्याविषयं।तस्याअपिपूर्वपतिसद्भावेउत्तरस्यानधिकारः।तदभावेत्वनन्यगत्याउत्तरस्यैवाधिकारः। ब्रह्मपुराणे । नकदाचित्स्वगोत्रायश्राद्धंकार्यमगोत्रजैः । असमाप्तव्रतस्यापिकर्त्तव्यंब्रह्मचारिणः॥श्राद्धंतुमातापितृभिर्नतुतेषांकरोतिसः।नित्यंगुरुकुलस्थस्य गुरुःसब्रह्मचारिणः ॥ निरन्वयेसपिण्डेतुमृतेसतिदयान्वितः । तदशौचंपुरातीर्त्वाकुर्य्यात्तत्पितृवत्क्रिया ॥ स्वगोत्रायेति स्वंगोत्रं विद्यमानंयस्यसस्वगोत्रः । तेनायमर्थः । विद्यमानस्वगोत्रस्यासगोत्रेणमातृसपिण्डादिनाराज्ञावानश्राद्धंकार्यम् । ब्रह्मचारिणोपिश्राद्धं पित्रैवकर्त्तव्यं।ब्रह्मचारिणातुमातृपितृश्राद्धंनकर्त्तव्यं । अन्याभावेतुवाक्यान्तरेणदाहादिकर्त्तव्यम् । ब्रह्मचर्य्यसमाप्तौत्र्यहाशौचं श्राद्धंचकर्त्तव्यम् । यदितुब्रह्मचारिणःसपिण्डोपिनभवतितदापितृवत् । यथापितापुत्रस्यश्राद्धादिकंकरोति तथाऽसपिण्डोपिगुरुरशौचादिकंकृत्वाश्राद्धंकुर्य्यात् । तथा । त्रयाणामाश्रमाणांचकुर्य्याद्दाहादिकांक्रियां । यतेःकिञ्चिन्नकर्त्तव्यंनचान्येषांकरोतिसः ॥ तथा । भ्रातुर्भ्रातास्वयंचक्रेतद्भार्याचेन्नविद्यते ॥ तस्यभ्रातृसुतश्चक्रेयस्यनास्तिसहोदरः॥ अत्रसहोदराभावेभ्रातृपुत्रस्याधिकारबोधनात् । बहूनामेकजातानांयद्येकःपुत्रवान्भवेत् । सर्वेतेनैवपुत्रेणपुत्रिणोमनुरब्रवीत् ॥ इतिमनुवचनंपितृव्यादीनांपुत्रित्वातिदेशकंनतुभ्रातृपुत्रस्यपुत्रत्वातिदेशकमितिव्यक्तमेवप्रतीयते । अन्यथापुत्रत्वाद्भ्रातृपुत्रस्यैवाधिकारःस्यात् । यावद्वचनंहिवाचनिक

मितिन्यायाच्चभ्रातृपुत्रस्यपुत्रत्वातिदेशकंनमनुवचनमित्यवसीयते । एवंचैतत्तुल्यतया । बह्वीनामेकपत्नीनामेकाचेत्पुत्रिणी
भवेत् । सर्वास्तेनैवपुत्रेणपुत्रिण्योमनुरब्रवीत् ॥ इत्यतिदेशोपिसत्यपिसपत्नीपुत्रेपत्युरेवाधिकारः । नचैवंपितृव्यानांसपत्नीमातु
श्चपुत्रित्वातिदेशेकिंफलमितिवाच्यम् । पुत्रित्वातिदेशेनपुन्नामनरकगमनाभावस्यसपत्नीमातुश्चपुत्रित्वेसापिण्डनसंभवस्यचफलस्य
विद्यमानत्वात् । तथा । दत्तानांचाप्यदत्तानांकन्यानांकुरुतेपिता । चतुर्थेहनितास्तेषांकुर्वीरन्सुसमाहिताः ॥ दत्तानांवाग्द
त्तानामित्यर्थः।मातामहानांदौहित्राःकुर्वन्त्यहनिचापरे । तेपितेषांप्रकुर्वन्तिद्वितीयेहनिसर्वदा ॥ जामातुःश्वशुराश्चकुस्तेषांतेपिचसं
यताः । मित्राणांतदपत्यानांश्रोत्रियाणांगुरोस्तथा ॥ भागिनेयसुतानांचसर्वेषांत्वपरेहनि । श्राद्धंकार्यन्तुप्रथमंस्नात्वाकृत्वाज
लक्रियां ॥ राज्ञिमृतेऽसपिण्डेतुनिरपत्येपुरोहितः । मंत्रीवातदशौचंतुपुराचीर्त्वाकरोतिसः । अत्रदौहित्रजामातृप्रभृतीनांसपिं
डाभावेधिकारः । तेषांचद्वितीयाहे । श्राद्धविधानंचास्थिसंचयश्राद्धपरंआद्यश्राद्धंतुचतुर्थदिनएवकर्त्तव्यं संबन्धेसतित्रिरात्रमि
तिदाहादिकरणेत्रिरात्राशौचाभिधानात् । दाहाद्यकरणेतुयथोक्तस्वस्वाशौचापगमेदौहित्रादिभिराद्यश्राद्धंकार्यम् । तथा । ब्राह्म
णस्त्वन्यवर्णानांनकरोतिकदाचन । कामाल्लोभाद्भयान्मोहात्कृत्त्वातज्जातितांव्रजेत् ॥ पुत्राःकुर्वन्तिविप्रायक्षत्रविट्शूद्रयोनयः । स
तादृशेभ्यःपुत्रेभ्योनकरोतिकदाचन ॥ स्वमाताकुरुतेतेषांतेपितस्याश्चकुर्वते ॥ तथा । ब्राह्मणेननकर्त्तव्यंशूद्रस्यत्वौर्ध्वदैहिकं ॥ शूद्रे
णवाब्राह्मणस्यविनापारशवात्क्वचित् ॥ पारशवस्तु । यंब्राह्मणस्तुशूद्रायांकामादुत्पादयेत्सुतम् । ऊढायांचाप्यनूढायांसवैपारशवोम
तः ॥ शूद्रस्यत्वनूढभार्याजातस्यपुत्रस्यपितृश्राद्धेपौनर्भवत्वादधिकारः । क्षतायांवाऽक्षतायांवापौनर्भवइतिवचनात् ।तथा । अपुत्रा

शयनंभर्त्तुः पालयंतीव्रतेस्थिता । पत्न्येवदद्यात्ततिंपण्डंकृत्स्नमर्थंलभेतच ॥ अत्रचप्रकरणे । अपुत्रस्यचयापुत्रीसापिपिंडप्रदाभवेत् ।
तस्यपिंडान्दशैतान्वाएकाहेनैवनिःक्षिपेदित्यादिवाक्यानिपुत्राभावेदुहितुरधिकारबोधकानीतिरत्नाकरेव्यवस्थापितं । तच्चश्राद्धक
ल्पतरुस्मृतिसारकृतोर्नानुमतं । ताभ्यांसिद्धवत्पुत्राभावेपत्न्यास्तदभावेसहोदरस्येत्येवमेवलिखनात् । व्यवहारोपितदुभयानुसारी ।
अतोव्यवहारानुरोधेनरत्नाकरलिखितमप्युपेक्षितं । अत्रचापुत्रस्यचयापुत्रीत्यादिवाक्यानिसपिण्डाद्यभावेदुहित्रधिकारबाधकानीतिव्य
वस्थापयितव्यं । यत्रतुव्यवहारविरोधोनापतातितत्रयथारत्नाकरमेवव्यवस्था । मार्कण्डेयपुराणे । स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदा
हृतं । सपिंडीकरणंतासांपुत्राभावेनविद्यते ॥ प्रतिसंवत्सरंकार्यमेकोद्दिष्टंनरैःस्त्रियः । मृताहनियथान्यायंनृणांयद्वदिहोदितं ॥ स्त्री
णामप्येवमेवेतियादृशेनसंबन्धेनपितृव्यत्वादिनापुरुषाणामेकादशाहादितादृशेनसंबन्धेनपितृव्यपत्नीत्वादिनास्त्रीणामपितत्कार्यमित्य
र्थः । तदेषप्रकरणार्थः । मृतस्यत्रिविधाक्रियाभवति । पूर्वामध्यमाउत्तराचेति । तत्र दाहमारभ्याशौचांतंयावत्पिंडदानादिकाक्रि
यापूर्वाक्रिया । अशोचापगमानंतरमेकादशाहादिसपिंडनपर्यन्तामध्यमा । तदूर्ध्वमेकोद्दिष्टरूपाउत्तरा । तत्रत्रयोदशविधानामपिपुत्रा
णांत्रिविधासुक्रियास्वधिकारः । तेषुचौरसःश्रेष्ठः । तदभावेपुत्रिकापुत्रः ततः पूर्वपूर्वाभावेउत्तरोत्तरोधिकारी । तेच औरसपुत्रि
कापुत्रक्षेत्रजकानीनसहोढगूढोत्पन्नपौनर्भवापविद्धदत्तक्रीतकृत्रिमस्वयमुपगतपारशवाः। तत्रचविभक्तानामविभक्तानांपुत्राणांमध्येपूर्वा
यांमध्यमायांचक्रियायांयोग्यस्यज्येष्ठस्यैवाधिकारः।ज्येष्ठस्यक्षतादिनाऽनधिकारे नियतसमयकर्त्तव्येष्वेकादशाहादिषुकनिष्ठस्याप्य
धिकारः। उत्तरक्रियायांतुसर्वेषामधिकारः। पुत्राभावेपौत्रोधिकारीतदभावेप्रपौत्रः तदभावेपत्नी तदभावेसहोदरः कनीयान् तदभावे

ज्येष्ठः तदभावेपितातदभावेभ्रातृपुत्रः तदभावेपूर्वक्रियायांमध्यमक्रियायांसपिण्डाऽधिकारः तदभावेदुहिता तदभावेसकुल्याः तद
भावेमातृसपिण्डाः तदभावेमातृसकुल्याः कुलद्वयाभावेमातरः तदभावेयथाकथंचित् परिगृहीताःस्त्रियः तदभावेएकसार्थप्रयाताः तद
भावेराजोऽद्देशेनधनग्राहकोधिकारीपितृहीनौपौत्रप्रपौत्रैासपुत्रयोरपिपितामहप्रपितामहयोःपार्वणेश्राद्धेऽधिकारिणौमृतस्यकन्याविवा
हेकन्यादाताप्याभ्युदयिकेधिकारी । असमाप्तषड्वर्षस्यपूर्वक्रियामात्रंतत्रभ्रातृपित्रादयोधिकारिणः । असमाप्तद्विवर्षस्यपूर्वक्रियापि
नास्तिकिन्तुभूमिनिखननमात्रं । स्त्रियाअपिद्विवर्षाभ्यंतरेभूमिनिखननमात्रम् । तदूर्ध्वंविवाहात्पूर्वंपूर्वक्रियामात्रं । तत्रपिताधि
कारीतदभावेभ्रात्रादिःऊढायाःत्रिविधासुक्रियासुपुत्रोधिकारी तदभावेपतिः तदभावेसपत्नीपुत्रः तदभावेस्नुषातदभावेपौत्रः तदभावे
प्रपौत्राः तदभावेसपिंडाः तदभावेसकुल्याः तदभावेपितृसपिंडाइतिश्राद्धमंजरी । शूद्रस्यापरिणीतस्यद्विव र्षादूर्ध्वंपूर्वक्रियामात्रम्
तत्रभ्रात्रादिरधिकारी । परिणीतस्यत्रिविधाक्रियातत्रपुत्रादिरधिकारीपूर्ववत्।केचित्तुअसमाप्तषड्वर्षस्यत्रैवार्णिकस्यस्त्रीशूद्रयोश्चापरिणी
तयोस्त्रिविधापिक्रिया अनुग्रहादिनानत्वावश्यकीत्याहुरिति । श्राद्धकल्पस्मृतिसारौ । गुरुकुलस्थितस्याशिष्यस्यभ्रातृपित्राभा
वेगुरुरधिकारी गुरोरपिपुत्रपत्नीभ्रातृहीनस्यशिष्यःयजमानस्यान्याभावेऋत्विगिति ॥ अथानधिकारिणः ॥ तत्रयाज्ञवल्क्यः ॥
नब्रह्मचारिणःकुर्युरुदकंपतितान च । पाखण्ड्यमाश्रिताःस्तेनानव्रात्यानविकर्मिणः। गर्भभर्तृद्रुहश्चैवसुराप्यश्चैवयोषितः॥ उदकशब्दे
नात्रप्रकरणेदाहादिकमपिलक्ष्यतेसाहचर्यात्।पाखण्डोवेदप्रामाण्यास्वीकर्त्तास्तेनाअत्रब्राह्मणसुवर्णातिरिक्ताविषयकचौर्य्यवृत्तयः ब्राह्म
णसुवर्णहारिणःपतित्वेनैवग्रहणात् । व्रात्याःस्वस्वोपनयनकालेऽकृतोपनयनाः । विकर्मिणःआलस्यादश्रद्धयाचस्वकर्मत्यागिनो

॥ २० ॥

निंदितकर्मकर्त्तारश्च सुराप्यइतिमद्यपायिकाःएतच्चत्रैवर्णिकस्त्रीविषयं। एतेब्रह्मचारिप्रभृतयोऽन्यस्योदकंनकुर्युः। मनुः। आदिष्टीनोदकंकुर्यादाव्रतस्यसमापनात्।समाप्तेतूदकंकृत्वात्रिरात्रेणैवशुद्ध्यति। आचार्यंस्वमुपाध्यायंमातरंपितरंगुरुम्। निर्हृत्यतुव्रतीप्रेतंनव्रतेनवियुज्यते॥ आदिष्टीब्रह्मचारीव्रतसमाप्तिर्ब्रह्मचर्यावसानंसमावर्त्तनंआचार्यउपनीयसाङ्गवेदाध्यापकः। गुरुस्तुउपनीयसंपूर्णवेदाध्यापकः उपनीयवेदैकदेशाध्यापकश्च। उपाध्यायोयत्किञ्चिदध्यापकः। एतेषांमातापित्रोश्चवहनदहनादावन्याभावेब्रह्मचारिणोदोषोनभवति। वसिष्ठः। ब्रह्मचारिणः शवकर्मणाव्रतान्निवृत्तिरन्यत्रमातापित्रोर्गुरोर्वा। गुरुशब्देनाचार्योपाध्याययोरपिग्रहणं। अथोदकाद्यनर्हाः। तत्रमनुः। वृथासंकरजातानांप्रव्रज्यासुचतिष्ठता।आत्मनस्त्यागिनांचैवनिवर्त्ततोदकक्रिया॥ वृथाशब्दःसर्वत्राभिसंबद्ध्यते वृथासंकरजाताअयथाभिधानसंकरजाताः वृथाप्रव्रज्यासुवेदाविहितप्रव्रज्यासु। वृथाआत्मत्यागिनः शास्त्राविहितशरीरत्यागकर्त्तारः। तथा। पाखंडमाश्रितानांचयुवतीनांचकामतः। गर्भभर्तृद्रुहांचैवसुरापीनांचयोषितां॥ उदकक्रियानिवर्त्ततइतिसंबन्धः। अथ पुत्रलक्षणम्। तत्रनारदः। औरसःक्षेत्रजश्चैवपुत्रिकापुत्रएवच। कानीनश्चसहोढश्चगूढोत्पन्नस्तथैवच। पौनर्भवोपविद्धश्चदत्तःक्रीतःकृतस्तथा॥ स्वयंचोपगतःपुत्राद्वादशैतेप्रकीर्त्तिताः॥याज्ञवल्क्यः। पिण्डदोंशहरश्चैषांपूर्वाभावेपरःपरः॥तत्रौरसलक्षणं। तत्रविष्णुः। अथद्वादशपुत्राभवन्ति। स्वेक्षेत्रेस्वयमुत्पादितःप्रथमपुत्रः।मनुः। संस्कृतायांचभार्यायांस्वयमुत्पादयेत्तुयम्।तमौरसंविजानीयात्पुत्रंप्रथमकल्पितं॥ देवलः॥सवर्णायांसंस्कृतायांस्वयमुत्पादितमौरसंपुत्रंविद्यादिति। सवर्णासमानवर्णा। अत्रसावर्ण्यंद्विजातित्वेनविवक्षितं। यदिब्राह्मणत्वादिनैवसावर्ण्यंविवक्षितंस्यात्तदाब्राह्मणस्यविवाहितयोःक्षत्रियावैश्ययोःस्वयमुत्पादितः सुतऔरसो

नस्यात्पुत्रान्तरेषुतस्यांतर्भावोनास्त्येव। अतस्तस्यौरसत्वमेव तेनशूद्रामात्रत्यागायसवर्णग्रहणमितिपारिजातः। अयमर्थः।विवाहि
तासुब्राह्मणक्षत्रियवैश्यजातीयासुभार्यासुस्वयमुत्पादितःपुत्रऔरसः। अथक्षेत्रजलक्षणम्। विष्णुः। नियुक्तायांसपिण्डेनोत्तमवर्णेनो
त्पादितः क्षेत्रजोद्वितीयः। मनुः। यस्तल्पजःप्रमीतस्यक्लीबस्यव्याधितस्यवा। स्वधर्मेणनियुक्तायांसज्ञेयःक्षेत्रजःसुतः॥ तल्पंक
लत्रम् तत्रजातःप्रमीतस्यमृतस्यक्लीबस्यनपुंसकस्यव्याधितस्यअपत्योत्पादनप्रतिबन्धकदुश्चिकित्स्यरोगवतःस्वधर्मेणघृताभ्यक्तत्वा
दिना नियुक्तायांपतिश्वशुरादिभिरनुज्ञातायां। तदयमर्थः। मृतस्यवाक्षमस्थवाभार्यायांपतिश्वशुरादिनियोगेनदेवरेणान्येनवो
त्कृष्टजातीयेनघृताभ्यक्ताद्दिमताउत्पादितःक्षेत्रजःपुत्रःसचक्षेत्रिणएव। यदातुनिरपत्योदेवरादिरत्रयदपत्यंभविष्यतितत् क्षेत्रिणो
ममचसमानंभविष्यतीतिव्यवस्थया अपत्यंउत्पादितवांस्तदासपुत्रोद्वयोरपिबीजिक्षेत्रिणोः पिण्डप्रदोभवति। तदाहमनुः।
क्रियाभ्युपगमार्थेनबीजार्थंयत्प्रदीयते। तस्येहभागिनौदृष्टौबीजीक्षेत्रिकएवच॥ अथपुत्रिकापुत्रलक्षणं। विष्णुः। यस्त्वस्याः
पुत्रःसमेपुत्रोभवेदिति। यापित्रादत्तासापुत्रिकापुत्रविधिनाऽप्रतिपादितापितृभ्रातृहीनापुत्रिकैव। वसिष्ठः। अभ्रातृकांप्रदास्या
मितुभ्यंकन्यामलंकृतां॥ अस्यांयोजायतेपुत्रःसमेपुत्रोभविष्यति। मनुः। अपुत्रोनेनविधिनासुतांकुर्वीतपुत्रिकाम्। यदपत्यं
भवेदस्यांतन्ममस्यात्स्वधाकरम्॥ स्वधाकरंश्राद्धादिकरमित्यर्थः।तदेवंव्यवस्थयायापित्रादत्ताचिंतितासतीयाच नदत्तासापिपुत्रि
कातस्याःपुत्रःपुत्रिकापुत्रः। औरसानुवृत्तौयाज्ञवल्क्यः। तत्समपुत्रिकापुत्रः औरसतुल्यइत्यर्थः। सचमातामहस्यपिण्डप्रदः।
तदाहदेवलः। अकृतावाकृतावापियाविन्देत्सदृशंसुतं। पुत्रीमातामहस्तेनदद्यात्पिण्डंहरेद्धनं॥ मातामहस्येतिशेषः। यदातुपुत्रि

कापुत्रस्यापितृमातामहौनिरपत्यौतदातयोरपिश्राद्धकारी । तदाहदेवलः । तत्तुल्यःपुत्रिकापुत्रोदायादःसोथवाभवेत् । पितुर्मा तामहस्यापिनिरपत्यस्यपुत्रवत् ॥ मनुः । मातुःप्रथमतःपिण्डंनिर्वपेत्पुत्रिकासुतः । द्वितीयन्तुपितुस्तस्यास्तृतीयंतुपितुःपितुः ॥ अथपौनर्भवलक्षणम् । विष्णुः।चतुर्थःपौनर्भवः । यातुपत्यापरित्यक्ताविधवास्वेच्छयाथवा । उत्पादयेत्पुनर्भूत्वासपौनर्भवउच्यते ॥ पुनर्भूत्वापुनःपुरुषान्तरेणसवर्णेनात्मानंविवाह्यस्वयंपुत्रमुत्पादयेत् सपौनर्भवः । याज्ञवल्क्यः । क्षतायांवाक्षतायांवाजातःपौनर्भवः सुतः । कात्यायनः । क्लीबंविहायपतितंयापुनर्लभतेपतिम् । तस्यांपौनर्भवोजातोव्यक्तमुत्पादकस्यसः । अथकानीनः । तत्र विष्णुः । कानीनःपंचमः । तथा । अप्रत्तादुहितायस्यपुत्रंविन्देततुल्यतः । पुत्रीमातामहस्तेनदद्यात्पिण्डंहरेद्धनम् । तथा । यापितृगृहेसंस्कृताकामादुत्पादयेत्सुतम् सकानीनोमातामहस्यभवतीत्याह । तदेवंकन्यादशायामेवसवर्णेनयः पुत्रउत्पादितः सकानी नकः । समातामहस्यैवश्राद्धकारी । यदितुतस्याःपरिणेतापिनिरपत्योभवतितदातस्यापिश्राद्धकारीसः । तथाचब्रह्मपुराणे । अदत्तायांचयोजातःसवर्णेनपितुर्गृहे । सकानीनःसुतस्तस्ययस्मैसादीयतेपुनः । यदितुकानीनस्यमातामहोनिरपत्यःकन्यापरिणे ताचनिरपत्यस्तदाद्वयोरपिसश्राद्धकारीति।पारिजातः।अथगूढोत्पन्नः।विष्णुः।गूढोत्पन्नःषष्ठोयस्यतल्पजस्तस्यासौ।मनुः।उत्पद्यतेगृहे यस्यनचज्ञायेतकस्यचित् । सगृहेगूढउत्पन्नस्तस्यस्याद्यस्यतल्पजः । तल्पंदाराः । यस्यतल्पजोयस्यभार्यायांजातस्तत्पुत्रः सभवतिबीजिनोऽपरिचयान्मातृजातीयश्चासौयदिहीनजातीयसंगमशंकानभवतितच्छंकायांकार्यानुपयुक्तएवसभवतीतिरत्नाकरः । अ थसहोढः । विष्णुः । सहोढःसप्तमःपुत्रः । मनुः । यागर्भिणीसंस्क्रियतेज्ञाताज्ञातापिवासती । वोढुःसगर्भोभवतिसहोढइतिचोच्य

ते ॥ विवाहकालीनहोममंत्रैर्यागर्भिण्येवसंस्क्रियतेतत्सुतःसहोढःसचपरिणेतुरेवभवति । अथदत्तकः । विष्णुः । दत्तकश्चाष्टमः
सचमात्रापित्रावायस्यदत्तस्तस्यस्यादितिशेषः।तथा।मातापितरौदद्यातांयमद्भिःपुत्रमापदि । सदृशंप्रीतिसंयुक्तौसज्ञेयोदत्रिमःसुतः ॥
आपदिपुत्रगृहीतुः पुत्रासंपत्तौसदृशंसवर्णंयंमातापितरौप्रीतिसंयुक्तौदद्यातांसदत्रिमोदत्तकः सुतः प्रीतिसंयुक्तावित्यभिधानात् भय
लोभादिनादाननिषेधोबोध्यते । वसिष्ठः । शुक्रशोणितसंभवोमातापितृनिमित्तकस्तस्यप्रदानविक्रयत्यागेषुमातापितरौप्रभवतः ।
नत्वेकंपुत्रंदद्यात्प्रतिगृण्हीयाद्वासहिसंतानायपूर्वेषांनस्त्रीपुत्रंदद्यात्प्रतिगृण्हीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः । पुत्रंप्रतिगृहीष्यन्बन्धूनाहूयरा
जनिचावेद्यनिवेशनस्यमध्येचव्याहृतिभिर्हुत्वाऽदूरेबान्धवसन्निकृष्टमेवप्रतिगृण्हीयात् । अस्यार्थः । मातृपित्रोः पुत्रदानादाव
धिकारः पत्यौसतिस्त्रियाः पत्यननुमत्यापुत्रदानेऽनधिकारः । पत्यनुमत्यातुपुत्रदानेऽधिकारः । पत्यभावेनधिकारएव।एकपुत्रस्यदा
नादौद्वयोरप्यनधिकारः । अथप्रतिगृहीताप्रथमतएवबन्धूनाहूयराज्ञेचकथयित्वास्वगृहमध्येस्वगृह्योक्तविधिनाअग्निस्थापनादिकृत्वा
आद्याएवाज्यभागमहाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यस्विष्टकृद्धोमान् नित्यान्कृत्वातत्रनैमित्तकंव्याहृतिहोमंकुर्यात् । ततोहोमान्तर
वत् संस्रवप्राशनादिपूर्णहोमातंकृत्वापुत्रंप्रतिगृण्हीयात्।अदूरेबांधवसन्निकृष्टंस्वजनभूतमित्यर्थः।तदभावेसन्निकृष्टमेव।एवशब्दोऽप्यर्थः।
तेनतदभावेऽसन्निकृष्टमपीत्यर्थः । अत्रराजनिबंधुषुचनिवेदनंदृष्टार्थमेवतस्यधनग्रहणेनिःशंकत्वार्थंनत्वदृष्टाऽर्थमतोनिवेदनेतेषांधर्मवि
श्लेषः । एवंचव्याहृतिहोमस्यपुत्रप्रतिग्रहांगत्वात् ।व्याहृतिमन्त्रपाठेचस्त्रीशूद्रयोरनधिकारात् स्त्रीशूद्रयोर्दत्तकः पुत्रोनभवतीत्येवेति ।
मनुः । ऋक्थगोत्रेजनयितुर्नहरेद्दत्रिमःसुतः । ऋक्थगोत्रानुगःपिण्डोव्यपैतिददतःस्वधा ॥ अस्यार्थः । दत्तस्यजनकगोत्रंनावतिष्ठतेनच

तद्धनगोत्रग्राहकत्वंचभवति । अस्यार्थः। दत्तस्यजनकगोत्रंनावतिष्ठते नचतद्धनंत्वपत्यार्थैंमातापित्रोर्यमंतिकात् । सतुक्रीतःसुतस्त
स्यसदृशोऽसदृशोपिवा । अस्यार्थः । मातापित्रोःसकाशात् यंक्रीणीयात्सक्रीतः पुत्रः क्रेतुरेवपिण्डप्रदः सदृशः सवर्णः असदृशोऽ
सवर्ण इतिपारिजातः । प्रकाशकारस्तु अत्रयद्यप्यसदृश इतिसामान्यतः श्रूयते तथापिहीनजातीयेनोत्तमजातीयः पुत्रोन
क्रेतव्यः उत्तमजातीयेनहीनजातीयः पुत्रः क्रेतव्यः सजातीयएवपुत्रः क्रेतव्यः ॥ सदृशासदृशत्वेगुणापेक्षयेतिमेधातिथिराह ।
अथस्वयमुपगतः । विष्णुः । स्वयंचोपगतोदशमः सचयस्योपगतस्तस्य । पुत्रइतिशेषः । मनुः । मातापितृविहीनोयस्त्यक्तोवास्या
दकारणात् ॥ आत्मानंस्पर्शयेद्यस्तुस्वयंदत्तस्तुसस्मृतः । अकारणादल्पापराधान्मातापितृभ्यांत्यक्तोमातपितृविहीनोवायःस्वय
मात्मानंस्पर्शयेद्दद्यात्।तवाहंपुत्रोभवामीत्येवंप्रकारेणस्वयमुपागतःपुत्रोभवति प्रतिग्रहीतुरेवपिण्डप्रदः।अथापविद्धः।विष्णुः।अपविद्ध
स्त्वेकादशःसमात्रापित्रावापरित्यक्तोयेनगृहीतस्तस्य।पुत्रइतिशेषः । मनुः । मातापितृभ्यामुत्सृष्टंतयोरन्यतरेणवा । यंपुत्रंप्रतिगृण्ही
यादपविद्धस्तुसस्मृतः ॥ मातापितृभ्यांपातित्यव्यतिरेकेणदुर्गत्याभरणासामर्थ्यादिनापरित्यक्तोयेनपुत्रत्वेनगृहीतस्तस्यसोपविद्धः
पुत्रोभवति। अथकृत्रिमः।मनुः।सदृशंयंप्रकुर्वीतगुणदोषविचक्षणम्। पुत्रंपुत्रगुणैर्युक्तंसज्ञेयःकृत्रिमःसुतः।अत्रापिसदृशःसदृशगुणइतिमे
धातिथिः । गुणदोषविचक्षणम् मातापित्रौर्ध्वदैहिककरणाकरणेगुणदोषज्ञम् पुत्रगुणैःशुश्रूषादिभिर्युक्तंएवंभूतंयंपुत्रंकरोतिसकृत्रि
मःपुत्रःसचपुत्रत्वकरस्यापिपिंडप्रदःनिजपित्रादीनांचपिण्डप्रदत्वंतस्यातिष्ठत्येव । तत्रप्रकारः । शुभसमयेपुत्रकर्त्तास्नातःकिञ्चिदभी
ष्टंवस्तुदत्वात्वंममपुत्रोभवेतिवदेत् । तवपुत्रभूतोस्मीतिसप्रातिवदेत् । वस्तुदानमत्राचारप्राप्तंनत्वावश्यकं।पुत्रत्वकरणेचतदुभयोरनुम

तिरेवप्रयोजिकातेनवाक्यविशेषस्यनपुरस्कारः। अथशूद्रापुत्रः।विष्णुः।यत्रक्वचनोत्पादितस्तुद्वादशः । यत्रक्वचनेतिऊढायामनूढायां
वाशूद्रायामित्यर्थः।एवमेवरत्नाकरः। तच्चशूद्रापुत्रस्यद्वादशत्वंकल्पांतरमेव। वस्तुतस्त्रयोदशत्वमेवकृत्रिमस्यैवबहुषुवाक्येषुद्वादशत्वे
नपाठात्। विष्णुस्मृतौतुकृत्रिमःपुत्रःपरिगणितएवनेतितत्रशूद्रापुत्रस्यद्वादशत्वं ।मनुः। यंब्राह्मणस्तुशूद्रायांकामादुत्पादयेत्सुतं।सपा
रयन्नेवशवस्तेनपारशवःस्मृतः॥ पारयन्नेवपितृत्वाभिमतस्यकिञ्चिदुपकुर्वन्नेवाऽल्पोपकारित्वात्पारशवः।सचजनयितुःपिंडप्रदःएवंचा
नूढशूद्राजातस्यपुत्रस्यजनकशूद्रश्राद्धादावतितरामधिकारः । यत्रचशूद्रस्यविवाहिताभार्यास्तितथाविधःपुत्रश्चतत्रापिसपुत्रएवा
धिकारीतिबृहस्पतिः । पुत्रास्त्रयोःदशप्रोक्तामनुनायेतुसर्वशः । संतानकारणात्तेषामौरसःपुत्रिकस्तथा ॥ आज्यंविनायथातै
लंसद्भिः प्रतिनिधिःस्मृतः । तथैकादशपुत्रास्तुपुत्रिकौरसयोर्विना ॥ अत्रचयद्यपिक्षेत्रजादयः कथितास्तथापिक्षेत्रजपौनर्भवका
नीनसहोढगूढोत्पन्नाःकलौनसंभवंतितेषांनिंदितत्वेनाभिधानात् । तथाचबृहस्पतिरेव । अनेकधाकृताःपुत्राऋषिभिर्येपुरातनैः ॥
नशक्यास्तेधुनाकर्त्तुंशक्तिहीनैर्नतत्क्षमं । तत्रानिंदितान्परिगणयति ॥ क्षेत्रजोगर्हितः सद्भिस्तथापौनर्भवःसुतः। कानीनश्चसहो
ढश्चगूढोत्पन्नस्तथैवच ॥ औरसपुत्रिकापुत्रयोरभावेदत्तकादयस्त्वनुज्ञाताएव । तथाचसएवाह । दत्तोपविद्धःक्रीतश्चकृतःशौद्र
स्तथैवच ॥ जातिशुद्धाः कर्मशुद्धामध्यमास्तेसुतामताः ॥ शौद्रःशूद्रापुत्रःइतित्रयोदशपुत्राणांलक्षणम् ॥ अथासपिण्डादिलक्षणं ।
तत्रमनुः। सपिंडतातुपुरुषेसप्तमोविनिवर्त्तते ॥ समानोदकभावश्चजन्मनाम्नोरवेदने॥सप्तमेसत्यनन्तरंसापिण्डतानिवर्त्ततेइत्यर्थः। शंख
लिखितौ। सपिंडितातुसर्वेषांगोत्रतःसाप्तपौरुषी ॥ पिंडश्चोदकदानंचशौचाशौचंतदानुगं ॥ गोत्रतःसंतानतःतदानुगंसमंताद्भावेनता

मनुगतंतदानुगंतेनसप्तमपुरुषावधिसंतानजानांपरस्परंसपिंडतेत्यर्थः । ब्रह्मपुराणे । सर्वेषामेववर्णानांविज्ञेयासाप्तपौरुषी ॥
सपिंडताततःपश्चात्समानोदकधर्मता ॥ ततःकालवशात्तत्रविस्मृतैर्जन्मनामभिः । समानोदकसंज्ञातुतावन्मात्रापिनश्यति ॥
सुमंतुः । ब्राह्मणानामेकपिंडस्वधानामादशमात् धर्मविच्छित्तिर्भवतिआसप्तमात्ऋक्थविच्छित्तिर्भवतिआतृतीयात्स्वधाविच्छि
त्तिर्भवति अन्यथापिंडशौचंक्रियाविच्छेदात्ब्रह्महत्तुल्योभवतिएकःपिंडःस्वधासंबंधीयेषान्तेएकपिंडस्वधाः तेषांदशममवधीकृत्य
परतोधर्मनिवृत्तिरशौचादिनिवृत्तिः । सप्तममवधीकृत्यपरतोदायनिवृत्तिः । तृतीयमवधीकृत्यस्वधानिवृत्तिः श्राद्धादिनिवृत्तिः
अन्यथाचतुर्थादर्वाक् पिंडनिवृत्तौसप्तमादर्वागृक्थविच्छित्तौएकादशादर्वाक्अशौचनिवृत्तौपापवान्भवतीत्यर्थः । मत्स्यपुराणे । ले
पभाजश्चतुर्थाद्याः पित्राद्याःपिंडभागिनः ॥ पिंडदःसप्तमस्तेषांसापिंड्यंसाप्तपौरुषं ॥ इदंप्रकारांतरमेव।कूर्मपुराणे । अप्रत्तानांतथास्त्री
णांसापिंड्यंसाप्तपौरुषं । प्रत्तानांभर्त्तृसापिंड्यंप्राहदेवः पितामहः ॥ अप्रत्तानामविवाहितानांप्रत्तानांविवाहितानां । एवंचरत्नाकरलि
खितैतद्वाक्यपर्यालोचनयायद्वसिष्ठवचनेप्रत्तानांस्त्रीणांत्रिपुरुषमितिसापिण्ड्यंप्रतिपादितंतद्वाग्दानोत्तरविषयमितिप्रतिभातिकन्याना
मपिसप्तपुरुषावधिसपिंडत्वव्यवहारात् । अत्रचप्रकरणार्थः।अशौचभागिनांसमंमृतस्यच प्रसूतस्यच बीजिपर्यन्तगणनयासप्तपुरुषा
भ्यन्तरत्वेसपिंडता भवति । दशमपुरुषाभ्यन्तरत्वेसमानोदकताभवति । सैवसकुल्यता । ततःपरमस्मात्पुरुषात् अयंजातइतिज्ञा
नाभावे । अस्मत्कुलजाइत्येवमाकारज्ञानमात्रगोचरागोत्रजाइत्युच्यन्तेदशमपुरुषादनन्तरंज्ञायमानजन्मनामत्वेबान्धवपदव्यपदेशः ।
पक्षिण्यशौचविधानंचप्रकरणांतरादेवेति॥इतिरुद्रधरकृतौशुद्धिविवेकेऽधिकारिनिरूपणेद्वितीयःपरिच्छेदः ॥ २ ॥ अथदेहादिद्रव्यशुद्धि

स्तत्रप्रथमंदेहशुद्धिः । यमः । सत्यंशौचंतपःशौचंशौचमिंद्रियनिग्रहः ॥ सर्वभूतदयाशौचंशौचमद्भिश्चपंचमं॥बृहस्पतिः । परापवादा
श्रवणंपरस्त्रीणामदर्शनं ॥ एतच्छौचंश्रोत्रदृशोर्जिव्हाशौचमपैशुनं ॥ प्राणिनामवधोऽस्तेयंशुचित्वंपादहस्तयोः ॥ असंश्लेषाणांनिवृत्तिः
शौचमित्यर्थः । मनुः । विष्णुः । सर्वेषामेवशौचानामर्थशौचंपरंस्मृतं ॥ योर्थेशुचिर्हिसशुचिर्नमृद्वारिशुचिःशुचिः ॥ मनुः । वसाशु
क्रमसृङ्मज्जामूत्रंविट्कर्णविण्णखाः ॥ श्लेष्माश्रुदूषिकास्वेदोद्वादशैतेनृणांमलाः ॥ कर्णविट्कर्णमलं । नखास्तुकृत्ताएवमलं ।
दूषिकानेत्रमलं । बौधायनः । आददीतमृदोयश्चषट्सुपूर्वेषु शुद्धये ॥ उत्तरेषुचषट्स्वद्भिःकेवलाभिर्विशुद्ध्यति ॥ पुरीषो
त्सर्गेविष्णुपुराणं । एकालिङ्गे गुदेतिस्रस्तथावामकरेदश ॥ उभयोःसप्तदातव्यामृदः शुद्धिमभीप्सता ॥ उभयोर्हस्तयोर्मि
लितयोः वामहस्तपृष्ठेषट्मृत्तिकादेयाः । षट्पृष्ठतइतिहारीतवचनात् । यमः । तिस्रस्तुपादयोर्देयाःशुद्धिकामेननित्यशः ।
एतच्चप्रतिपादं । तथा । तिस्रस्तुमृत्तिकादेयाः कृत्वातुनखशोधनं।हस्तद्वयइतिशेषः । केवलमूत्रोत्सर्गेदक्षः । एकालिंगेतु
सव्येत्रिरुभयोरद्वयंस्मृतम् ॥ सव्येहस्तेउभयोर्हस्तयोरित्यर्थः । ब्रह्मपुराणे । पादयोर्द्वेगृहीत्वाच सुप्रक्षालितपाणिना ॥ आच
म्यतुततःशुद्धःस्मृत्वाविष्णुंसनातनं । पादयोर्द्वंप्रतिपादमेकैकामृद्देया । बोधायनः । मूत्रवद्रेतसःसमुत्सर्गे शौचमितिशेषः ।
शंखः । मृत्तिकातुसमुद्दिष्टात्रिपर्वापूर्य्यतेयया ॥ इदंमृत्तिकापरिमाणकथनंगुदंविहाय । तत्रतुदक्षः । अर्द्धप्रसृतिमात्रातुप्रथमं
मृत्तिकास्मृता । द्वितीयाचतृतीयाचतदर्द्धंपरिकीर्त्तिता ॥ ऋष्यशृङ्गः । यस्मिन्स्थानेकृतंशौचंवारिणातत्तुशोधयेत् ॥ नशु
द्धिस्तुभवेत्तस्यमृत्तिकांयोनशोधयेत् ॥ मृत्तिकासंख्यामुक्त्वामनुः । एतच्छौचंगृहस्थानांद्विगुणंब्रह्मचारिणां ॥ त्रिगुणंतुवनस्थानां

यतीनांचचतुर्गुणं ॥ आपस्तंबः । अन्हिशौचंयथाप्रोक्तंनिश्यर्द्धंतुतदिष्यते ॥ पथिपादस्तुविज्ञेय आर्त्तःकुर्याद्यथाबलं ॥ पथी
तियत्रमार्गेविलंबेसतिचौरादितोऽनिष्टशंकाभवतितत्परं। आर्त्तोरोगी । यमः । सकर्दमासुरथ्यासुप्रविश्यग्रामसंकरं ॥ जंघाभ्यां
मृत्तिकास्तिस्रःपद्भ्यांतुद्विगुणाःस्मृताः ॥ अथप्रक्षालनादिशुद्धिः । अङ्गिराः । ऊर्ध्वंनाभेः अपवित्रद्रव्येणविष्ठादिनाकरौमुत्क्वायदं
गमुपहन्यतेतत्रस्नानम् । अधस्तात्तुक्षालनेनैवशुद्ध्यति । इंद्रियेचप्रविष्टंस्यादमेध्यंयदिकुत्राचित् ॥ मुखेपिसंस्पर्शगतंतत्रस्नानंवि
शोधनं । विष्णुः।नाभेरधस्तात्प्रबाहुषुचकापिकैर्मलैःसुराभिर्मद्यैर्वापिहतोमृत्तोयैस्तदंगंप्रक्षाल्याचम्यातंद्रितःशुद्धचेत् । अन्यत्रोप
हतोमृत्तोयैस्तदंगंप्रक्षाल्यस्नानेन । चक्षुष्युपहतउपोष्यस्नात्वापंचगव्येनदशनच्छदोपहतश्च। प्रबाहुःकफोणेरधोभागःपंचगव्येनप्रा
शितेनशुद्धचेदितिशेषः । ऋष्यशृङ्गः। मद्यविण्मूत्रविप्रुड्भिःसंस्पृष्टंमुखमंडलं ॥ मृत्तिकागोमयैर्लेपात्पंचगव्येनशुद्धयति ॥ विप्रु
षोऽत्यन्तमल्पबिंदवः । शातातपः । रजकश्चर्मकृच्चैवव्याधजालोपजीविनः ॥ चैलनिर्णेजकश्चैवनटःशैलूषकस्तथा ॥ मुखेभग
स्तथाश्वाचवनितासर्वगातथा ॥ चक्रीध्वजीवध्यघातीग्रामकुक्कुटशूकरौ ॥ एभिर्यदंगंस्पृष्टंस्याच्छिरोवर्जंद्विजातिषु ॥ तोयेनक्षा
लनंकृत्वा आचांतःशुचितामियात् ॥ रजकोवस्त्ररंजनकर्तानटोनर्त्तकःशैलूषोनाटकाद्यभिनेतामुखेभगोमुखयोनिरितिप्रसिद्धःचक्री
तैलिकःध्वजीशौंडिकःवद्ध्यघातीचोरादिवधेनियुक्तः । अत्रशिरःशब्देननाभेरूर्ध्वंलक्ष्यते । पैठीनसिः । उच्छिष्टरेतोविण्मू
त्रंसंस्पृश्योन्मृज्याचम्यप्रयतोभवतित्रिःप्रक्षाल्यचतंदेशं । अत्रात्रिःप्रक्षाल्याचम्यप्रयतोभवतीत्यन्वयः । उच्छिष्टंमानवंस्पृष्ट्वा
भोज्यंवापितथाविधं ॥ तथैवहस्तौपादौचप्रक्षाल्याचम्यशुद्धयति ॥ भोज्यंतथाविधमुच्छिष्टमेवभक्तादि ॥ यदंभःशौचनिर्मुक्तंक्षितिं

प्राप्यविनश्यति॥प्रक्षाल्याशुचिलिप्तंचसंस्पृश्याचम्यशुद्ध्यति॥अशौचजलार्द्रितभूमिंस्पृष्ट्वामलाद्यशुचिलिप्ताङ्गंप्रक्षाल्याचम्यशुद्ध्य
तिइतिवाक्यार्थः। बौधायनः । नीवींविस्रस्यपरिधायोपस्पृशेदाचमेदित्यर्थः ॥ विष्णुः । पंचनखास्थ्यस्नेहंस्पृष्ट्वाचमेत्। चांडालम्ले
छभाषणेचपंचनखास्थिभक्ष्येतरपंचनखास्थि । आपस्तम्बः । रिक्तपाणिर्वयसउद्यम्यापउपस्पृशेत् । शक्तिविषयेनमुहूर्त्तमप्य
प्रयतःस्यात्रिक्तपाणिःशून्यहस्तोवयसेपक्षिणे उद्यम्यपाणिमाचमेदित्यर्थः । हारीतिः । देवताभिगन्तुकामआचामेत् । तथा । नो
त्तरेदनुपस्पृश्यजलपारगमनेपूर्वमाचमितव्यमित्यर्थः । यमः । उत्तीर्योदकमाचम्यावतीर्यापउपस्पृशेत् । एवंस्याच्छ्रेयसायुक्तोवरुण
श्चैवपूजितः॥मन्वङ्गिरोबृहस्पतयः। सुप्त्वाक्षुत्त्वाथभुक्त्वाचनिष्ठीव्योक्त्वानृतंवचः ॥ पीत्वापोध्येष्यमाणश्चआचामेत्प्रयतोपिसन् ॥
क्षुत्त्वाच्छिक्कांकृत्वेत्यर्थः । अत्रशयनादिकृत्वाद्विराचमनं कर्त्तव्यम् । वेदाध्ययनपूर्वकालेचाद्विराचमनमित्यर्थः । वायुपुराणे ।
निष्ठीवनेतथाभ्यङ्गे तथापादावसेचने ॥ उच्छिष्टस्यचसंभाषादशुच्युपहतस्यच ॥ संदेहेषुचसर्वेषु शिखांमुक्त्वातथैवच ॥
विनायज्ञोपवीतेननित्यमेवमुपस्पृशेत् ॥ उष्ट्रवायससंस्पर्शेदर्शनेचान्त्यजन्मनाम् ॥ निष्ठीवनंमुखेनश्लेष्मत्यागःनिष्ठीवनादौकृते
आचमनं । सन्देहेषुचाचमननिमित्तसंशयेषुचआचमनंकर्त्तव्यंशिखांमुक्त्वाविनायज्ञोपवीतेनेत्येताभ्यांशिखामोचनंयज्ञोपवीतत्या
गश्चाचमननिमित्तमुक्तं । तेनैतत्करणानंतरंपुनर्बद्ध्वाशिखांधृत्वाचयज्ञोपवीतमाचमनीयमित्यर्थः । संवर्त्तः । चर्मारंरजकंवैणुंधीवरं
नटमेवच । एतान्स्पृष्ट्वानरोमोहादाचामेत्प्रयतोपिसन् ॥ अथाचमनानुकल्पः ॥ मार्कण्डेयपुराणे । कुर्यादाचमनंस्पर्शङ्गोपृष्ठस्या
र्कदर्शनं ॥ कुर्वीतालंभनंवापिदक्षिणश्रवणस्यच ॥ यथाविभवतोह्येतत्पूर्वाभावेततःपरं ॥ नविद्यमानेपूर्वस्मिन्नुत्तरप्राप्तिरिष्यते ॥

वृद्धशातातपः । वातकर्मणिनिष्ठीव्यदंतश्लिष्टेतथानृते ॥ क्षुतेपतितसंभाषेदक्षिणंश्रवणंस्पृशेत्॥अग्निरापश्च देवाश्चचंद्रादित्यनिलास्त
था ॥ एतेसर्वेंहिविप्राणां श्रोत्रेतिष्ठंतिदक्षिणे ॥ बौधायनः । आर्द्रंतृणंभूमिंगोमयंवाउपस्पृशेत् । अथाचमनापवादः । देवलः ।
भोजनेदंतलग्नानि निर्हृत्याचमनंचरेत् । दंतलग्नमसंहार्य्यंलेपंमन्येतदंतवत् ॥ नतत्रबहुशःकुर्याद्यत्नमुद्धरणेपुनः ॥ तत्रात्यं
तमशौचंस्यात्तृणवेधाद्व्रणेकृते ॥ आपस्तंबः । नश्मश्रुभिरुच्छिष्टोभवत्यन्तरास्पृशद्भिर्यावन्नहस्तेनोपस्पृशाति । वासिष्ठः ।
दंतवद्दंतलग्नेषुयच्चाप्यंतर्मुखे भवेत् ॥ आचांतस्यावशिष्टंस्यान्निगिरन्नैवतच्छुचिः ॥ यच्चापीति आचमनानन्तरमपिप्रमाद
तोवशिष्टंयदन्नकणाद्युपलभ्यतेमुखाभ्यन्तरेतन्निगिरन्नेवशुचिर्भवति । मनुः । स्पृशंतिबिंदवः पादौयआचामयतः परान् ॥ भूमिगैस्ते
समाज्ञेयानतैरप्रयतोभवेत् ॥ यमः । प्रयांत्याचमतांयास्तुशरीरेविप्रुषोनृणाम् ॥ उच्छिष्टदोषोनास्त्यत्रभूमितुल्यास्तुताः स्मृताः ॥
मनुः । नोच्छिष्टंकुर्वंतेमुख्याविप्रुषोंगंनयंतियाः ॥ मुख्यामुखभवाविप्रुषोंगन्नयन्तियांतिता।उच्छिष्टंनकुर्वंतइत्यर्थः । अंगंगतासुच
द्विरोमक्लेदनकरणक्षमास्वाचमनं ॥ तथापैठीनसिः । द्विरोमक्लेदनेष्वाचामेत् । अत्र्याङ्गिरसौ । मधुपर्केतुसोमेच अप्सुप्राणाहुती
षुच । नोच्छिष्टस्तुभवेद्विप्रोयथात्रेर्वचनंतथा ॥ अप्सुअपोशाने। एवमेवकल्पतरुः । प्राणाहुतिषुपंचग्रास्यां । शातातपः । दंतल
ग्नफलेमूलेभक्ष्येस्नेहेतथैवच ॥ तांबूलेचेक्षुखण्डेचनोच्छिष्टोभवतिद्विजः ॥ फलेतिक्तकषायेजातीफलादौसमाचारादित्याहुः प्रामा
णिकाः । भक्ष्येकटुकषायेमतुः । उच्छिष्टेनतुसंस्पृष्टोद्रव्यहस्तः कथंचन । अनिधायैवतद्द्रव्यमाचान्तः शुचितामियात् ॥
द्रव्यहस्तोदुग्धादिहस्तएवाचान्तः शुचितांप्राप्नुयादितिरत्नाकरः । द्रवमत्रान्नपानव्यतिरिक्तमित्याचारादर्शः । बृहस्पतिः । प्रचरं

श्वान्नपानेषुयदोच्छिष्टमुपस्पृशेत् । भूमौनिधायतद्द्रव्यमाचम्यप्रचरेत्पुनः ॥ प्रचरन् परिवेषणंकुर्वाणः अन्नपानेषुस्नेहपक्कादिष्विति
रत्नाकरः । भूमिनिहितस्यतुद्रव्यस्याभ्युक्षणं । तथा । अरण्येनुदकेरात्रौचौरव्याघ्राकुलेपथि।कृत्वामूत्रं पुरीषंचद्रव्यहस्तोनदुष्यति ॥
शौचंतुकुर्यात्प्रथमंपादौप्रक्षालयेत्ततः । उपस्पृश्यतदभ्युक्ष्यगृहीतंशुचितामियात् ॥ आपस्तम्बः । कृत्वामूत्रंपुरीषंचद्रव्यहस्तः
कथंचन । भूमावन्नंप्रतिष्ठाप्यकृत्वास्नानंयथाविधि ॥ तत्संयोगात्तुपक्कान्नमुपस्पृश्यततः शुचिः ॥ अथ स्नानशुद्धिः । तत्रमनुः ।
दिवाकीर्त्तिमुदक्यांचसूतिकांपतितंतथा । शवंतत्स्पृष्टिनंचैवस्पृष्ट्वास्नानेनशुद्ध्यति ॥ आचम्यप्रयतोनित्यंजपेदशुचिदर्शने । सौरान्म
न्त्रान्यथोत्साहंपावमानीश्चशक्तितः॥नारंस्पृष्ट्वास्थिसस्नेहंस्नात्वाविप्रोविशुद्ध्यति।दिवाकीर्त्तिश्चांडालःउदक्यारजस्वलासूतिकाप्रसवेस
त्यप्रातस्नानसमया।तत्स्पृष्टिनमिति।दिवाकीर्त्यादीनांसर्वेषांतच्छब्देनपरामर्षः।तेनचाण्डालादिस्पर्शःनचेत्यर्थः।एतच्चाकामकृतस्पर्श
विषयं।कामकृतेतुबृहस्पतिः।पतितंसूतिकामंत्यंशवंस्पृष्ट्वातुकामतः॥स्नात्वासचैलंहुत्वाग्निंघृतंप्राश्यविशुद्ध्यति॥सचैलमितियद्वस्त्रम
ङ्गलग्नस्पर्शकालेभवतितेनसहैवस्नातव्यमित्यर्थः । स्नानंचेदंजलाशयावगाहनासंभवेउष्णोदकेनापिकर्त्तव्यं।यदाहशंखः।नित्यंनैमित्ति
कंचैवक्रियांगंमलकर्षणम्।तीर्थाभावेपिकर्त्तव्यमुष्णोदकपरोदकैः ॥ अशुचिदर्शनेतुपावमानीः सौरान्मंत्रांश्चआचम्यप्रयतोजपेत् ॥ अ
शुचिश्चांडालादिरेवेतिरत्नाकरः।पावमान्यऋग्विशेषाः।बहुत्वंचत्रित्वपर्यवसितं।अस्थिस्पर्शेचात्रस्नानमकामकृते । कामकृतेतुब्रह्मपुरा
णे । मानुषास्थितुसंस्पृश्यास्निग्धंनिःस्नेहमेववा । स्नायाद्र्द्रांसंस्पृशेत्सूर्यंपश्येद्विष्णुमनुस्मरेत् ॥ निःस्नेहास्थिसंस्पर्शेअकामकृते
आचमनमात्रंविष्णुसूक्तं।एतच्चसर्वंद्विजास्थिस्पर्शे। अन्यत्रतुकामकृतेवसिष्ठः । मानुषास्थिस्निग्धंस्पृष्ट्वात्रिरात्रमाशौचं । अस्निग्धेत्वहो

रात्रमिति। अत्रसर्वैकवाक्यतयायमर्थः।भक्ष्यपंचनखास्थिस्पर्शेदोषाभावः। अभक्ष्यपंचनखास्नेहास्थिस्पर्शे आचमनं। सस्नेहब्राह्मणा
स्थिस्पर्शेऽकामकृतेस्नानमात्रम्। कामकृतेस्निग्धास्निग्धब्राह्मणास्थिस्पर्शेस्नानंगोस्पर्शनंसूर्यदर्शनंविष्णुस्मरणं।निःस्नेहब्राह्मणास्थिस्प
र्शेअकामकृतेआचमनमात्रम्। ब्राह्मणेतरमानुषसंबंधिस्निग्धास्थिस्पर्शेकामकृतेत्रिरात्रमाशौचं। अस्निग्धब्राह्मणेतरास्थिस्पर्शेऽकाम
कृतेऽहोरात्रमाशौचम्। मनुः।वांतोविरिक्तःस्नात्वाचघृतप्राशनमाचरेत्। आचामेदेवभुक्त्वान्नंस्नानंमैथुनिनः स्मृतम्॥ वान्तःकृतव
मनः विरिक्तःकृतविरेकः प्रकृताधिकविरेकवान्। एवंभूत्वास्नात्वाघृतंप्राश्यविशुद्ध्यतीत्यर्थः। मिलितंचैतद्द्वयंनिमित्तम् मैथुनेदुः
स्वप्नेवमनविरेकयोरितिविष्णुवचनादितिरत्नाकरः। आचामेदित्यादिअन्नंभुक्त्वावांतआचामेदेवनस्नायात्।तेनदिनांतरेवमनविरेकयोः
स्नाननिमित्तत्वमित्यर्थः।स्नानंमैथुनिनइत्यपिऋतुकालमैथुनविषयं।तथाचशातातपः।ऋतौतुगर्भशंकित्वात्स्नानंमैथुनिनःस्मृतं। अनृ
तौतुसदाकार्य्यंशौचंमूत्रपुरीषवत् ॥ मूत्रपुरीषवदितिलेपालपत्वभूयस्त्वविषयतयाव्यवस्थितं। यमः। अजीर्णेभ्युदितेवांतेश्मश्रुक
र्मणिमैथुने॥दुःस्वप्नेदुर्जनस्पर्शेस्नानमात्रंविधीयते। अजीर्णेभ्युदितेसूर्योदयानन्तरंवांतेवांतसमुदितमेतन्निमित्तंतेनपर्युषितवांतेस्नानमि
त्यर्थः। श्मश्रुकर्मणिश्मश्रुक्षौरेमैथुनेऋतुकालएवस्नानं। तत्स्नानंप्रातःकालेकर्त्तव्यमितिवृद्धाइतिश्रीदत्तोपाध्यायाः। दुर्जनश्चांडा
लादिःदेवलः। श्वपाकंपतितंव्यंगमुन्मत्तंशवहारकं। सूतिकांसूयिकांनारींरजसाचपरिप्लुतां॥श्वकुक्कुटवराहांश्चग्राम्यान्संस्पृश्यमानवः।
सचैलंसशिरःस्नात्वातदानीमेवशुद्ध्यति॥ अशुद्धान्स्वयमप्येतान् शुद्धश्चयदिसंस्पृशेत्। विशुद्ध्यत्युपवासेनतप्तकृच्छ्रेणवापुनः॥
सूयिकाप्रसवकारयित्री।कृच्छ्रेणवापुनरितिवारंवारकामकृतस्पर्शविषयं। तथाऽपस्पृश्याशुचिस्पृष्टंतृतीयंवापिमानवः। हस्तौपादौ

चतोयेनप्रक्षाल्याचम्यशुद्धयति । अत्रचाण्डालादिस्पृष्टस्पर्शेअज्ञानकृतेहस्तपादादिप्रक्षालनमाचमनंचज्ञेयम् । कामकृतेचां
डालादिस्पृष्टस्पर्शेस्नानंमनूक्तं । तथा। मानुषास्थिवसांविष्ठामार्त्तवंमूत्ररेतसी । मज्जानंशोणितंवापिपरस्ययदिसंस्पृशेत् ॥ स्ना
त्वापमृज्यलेपादीनाचम्यसशुचिर्भवेत् । तान्येवस्नानीसंस्पृश्यपूतःस्यात्परिमार्जनात् ॥ लेपादीनपमृज्यस्नात्वाचोतिक्रमः।अत्रव
सादीनामपिमानुषसंबन्धिनामेवोपादानंसान्निहितत्वात् । वसादिस्पर्शश्चात्रनाभेरुपरिस्नानहेतुः । ऊर्ध्वन्नाभेःकरौमुक्त्वायदंगमुप
हन्यते ॥ तत्रस्नानमधस्तात्तुक्षालनेनैवशुद्धयति ॥ इत्यङ्गिरोवचनात् । अधःस्पर्शेतुक्षालनं आचमनमुभयत्र। बौधायनः ॥
चाण्डालेनसहाध्वगमनेसचैलस्नानम् ।इदंचकामकृतविषयं ।चांडालस्यमुख्यतयातत्सहगमनविषयामित्यर्थइतिरत्नाकरः। पाराशरः ।
चैत्यवृक्षश्चितिर्यूपश्चांडालःसोमविक्रयी । एतांस्तुब्राह्मणःस्पृष्ट्वासचैलोजलमाविशेत् ॥ बौधायनः । शुनोपहतःसचैलोजलमव
गाहेत । प्रक्षाल्यचतंदेशमग्निनासंस्पृश्यपुनः प्रक्षाल्यपादौचाचम्यप्रयतोभवति । शुनोपहतःशुनास्पृष्टः । अत्रनाभेरूर्ध्वस्प
र्शेस्नानंनाभेरधःस्पर्शेप्रक्षाल्याचमनंचेतिव्यवस्थितोविकल्पइतिरत्नाकरः। हारीतः।श्वपचमुष्टिकप्रेतहारकशवादिसंस्पृश्यदेवीरापइत्यं
ताभिरंतर्जलेस्नातःपूतोभवति ॥ श्वपचःश्वखादकःटांकइतिप्रसिद्धः । मुष्टिकःशबरइतिरत्नाकरः । देवीरापइत्येताःदेवीरापोअपान्नपादि
त्याद्यास्तिस्रऋचः अयंचप्रयोगोवारंवारस्पर्शे अन्यथास्नानमात्रं । तथा । अजीर्णवांतश्मश्रुकर्माऽयोनिपशुदिवामैथुनगमनेच अयोनि
योनिव्यतिरिक्तमंगंपशुर्गवादिःदिवादिनंएतेषुमैथुनगमनेअजीर्णवांतश्मश्रुकर्मणोश्चस्नानमित्यर्थः । पराशरः । श्वकाकैरवलीढस्यनखै
र्विदलितस्यच । अद्भिःप्रक्षालनंशौचमग्निनाचोपचूडनं ॥ अवलीढस्यजिव्हयास्पृष्टस्य । उपचूडनंशिरोभिन्नांगेवन्हिज्वालयास्पर्श

नं ॥ च्यवनः । श्वानंश्वपाकंप्रेतधूमंदेवद्रव्योपजीविनं । ग्रामयाजकंयूपंचितिंचितिकाष्ठंमद्यंमद्यभाण्डंसस्नेहंमानुषास्थिशवस्पृष्टं
रजस्वलांमहापातकिनंशवंस्पृष्ट्वासचैलमंभोवगाह्यउत्तीर्याग्निमुपस्पृशेत् गायत्र्यष्टशतंजपेत् । घृतंप्राश्यपुनःस्नात्वात्रिराचामेत् ।
अत्राग्निस्पर्शादिकामकृतेवारंवारस्पर्शे । अन्यथास्नानमात्रं । आपस्तम्बः । एकांशाखांसमारुह्यचंडालादिर्यदाभवेत् । अनश्नन्ब्रा
ह्मणस्तत्रस्नानेनशुचितामियात् ॥ कालिकापुराणे । स्पृष्ट्वारुद्रस्यनिर्माल्यंसवासा आप्लुतःशुचिः ॥ निर्माल्यमत्रापनीतमेवेत्याचा
रादर्शः । व्यासः । भासवानरमार्जारखरोष्ट्राणांशुनांतथा ॥ शूकराणाममेध्यंचस्पृष्ट्वास्नायात्सचलैकं ॥ भासोगोष्ठकुक्कुटइतिप्रसिद्धः ।
गृध्रोवा । अत्रोर्ध्वांगस्पर्शेस्नानं ॥ नाभेरधोंगस्पर्शेमृत्तोयाभ्यांप्रक्षालनमाचमनंचवाक्यांतरैकवाक्यतया।याज्ञवल्क्यः। चाण्डालपुल्क
सम्लेच्छभिल्लपारसिकादिकान् । महापातकिनश्चैवस्पृष्ट्वा स्नायात्सचैलकम् ॥ पुल्कसश्चांडालजातिभेदः म्लेच्छाःप्रसिद्धाः भिल्ला
स्तद्भेदाःपारसिकायवनाःआदिपदेनतज्जातिभेदाविज्ञेयाः । मार्कण्डेयपुराणे । अभोज्यसूतिकाषंढमार्जाराखुश्वकुक्कुटान् ॥ पतिताप
विद्धचांडालमृतहारांश्चधर्मवित् ॥ संस्पृश्यशुद्ध्यतिस्नानात् उदक्याग्रामशूकरौ ॥ अत्रमार्जारस्पर्शेयदुपस्नानंतद्यदिमार्जारः
पुरुषेणस्पृश्यतेतदाज्ञेयं । यदिमार्जारएवपुरुषंस्पृशति भाण्डादिवातदापुरुषादेरशौचाभावः । तद्विषयमेवमार्जारश्चसदाशुचिरिति
विष्णुवचनमितिव्यवस्थेत्याचारादर्शः ॥ पैठीनसिः । अनुदकमूत्रपुरीषकरणे सचैलस्नानंउदकव्यतिरेकेणमूत्रपुरीषोत्सर्गा
नंतरंशौचविलंबेशौचंकृत्वास्नानमित्यर्थः । ब्रह्मपुराणे । उच्छिष्टेनाथविप्रेणविप्रःस्पृष्टस्तुतादृशः । उभौस्नानंप्रकुरुतःसद्य
एवविशुद्ध्यतः । लघुहारीतः । श्वविष्ठांकाकविष्ठांवाकंकगृध्रनरस्यच । अधोच्छिष्टंश्वसंस्पृश्यसचैलोजलमाविशेत् । ऊर्द्ध्वो

च्छिष्टस्तुसंस्पृष्टःप्रायश्चित्तंसमाचरेत् ॥ उपोष्यरजनीमेकांपंचगव्येनशुद्ध्यति ॥ अधोच्छिष्टोमूत्राद्युत्सर्गेणाशुद्धःऊर्द्ध्वोच्छिष्टो
भोजनोच्छिष्टः। जलमाविशेत्स चैलंस्नायादित्यर्थः । सर्वत्रचात्रप्रकरणे जलमाविशेदित्यादिवाक्यानिवरुणस्नानोपलक्षकानीत्याचा
रादर्शः। शंखः। रथ्याकर्दमतोयेनष्ठीवनाद्येनवापुनः ॥ नाभेरूर्ध्वंनरःस्पृष्टःसद्यःस्नानेनशुद्ध्यति ॥ अत्रचप्रकरणेएषुनैमित्तिक
स्नानेषुमंत्रतर्पणेनस्तः। तथाचापस्तंबः। अस्पृश्यास्पर्शनेवान्ते अश्रुपातेक्षुरेभगे ॥ स्नानंनैमित्तिकंप्रोक्तंदैवपैत्रविवर्जितं ॥ जला
शयमज्जनासंभवेउष्णोदकेनाप्येतत्स्नानंकर्त्तव्यं। तथाचशंखः। नित्यंनैमित्तिकंचैवक्रियांगंमलकर्षणं। तीर्थाभावेपिकर्त्तव्यमुष्णो
दकपरोदकैः॥ क्रियांगंदेवपूजादिक्रियांगंमलकर्षणाभ्यङ्गपूर्वकं। यदातुरोगादिवशादुष्णोदकस्नानेशक्तिरपिनभवतितदाशुद्धिप्रकार
माह। यमः। आतुरस्नानसंप्राप्तेदशकृत्वस्त्वनातुरः ॥ स्नात्वास्पृशेताक्षेप्रंततःशुद्ध्येत्सआतुरः ॥ इतिस्नानशुद्धिप्रकरणम् ॥
अथतैजसादिद्रव्यशुद्धिः। ब्रह्मपुराणे। सुवर्णरौप्यशंखाश्मशुक्तिरत्नमयानिच ॥ कांस्यायस्ताम्ररैत्यानित्रपुसीसमयानिच ॥ निर्ले
पानिच शुध्यंतिकेवलेनोदकेनच ॥ शूद्रोच्छिष्टानिशोध्यानित्रिधाक्षाराम्लवारिभिः ॥ सूतिकाशवविण्मूत्ररजस्वलाहतानिच ॥
प्रक्षेप्तव्यानितान्यग्नौयच्चयावत्सहेदपि ॥ रत्नमयानिस्फटिकादिघटितानिरैत्यानिपित्तलघटितानित्रपुमयंरंगघटितम्। शूद्रोच्छिष्टा
निशूद्रोच्छिष्टस्पृष्टानीत्ययमर्थोज्ञेयः।शूद्रेणभुक्तेभाजने अग्रेशंखवाक्येनशुद्धिर्लिख्यते।सूतिकारजस्वलोपहतत्वंभाजनस्यभोजनद्वारै
वतत् शंखवाक्येस्फुटीकरिष्यते। प्रक्षेप्तव्यानीतिप्रक्षालनानन्तरंयद्भाजनंयावत्समयपर्यन्तं अग्निंसहेततावत् अग्नौसंयोजयेत्।
मनुः। ताम्रायःकांस्यरैत्यानांत्रपुणः सीसकस्यच ॥ शौचंयथार्हंकर्त्तव्यंक्षाराम्लोदकवारिभिः ॥ यथार्हंमलापकर्षणसामर्थ्यानुसारे

णक्षारोभस्मअम्लोदकंजंबीरादिरसःयोग्यतानुसारादम्लोदकंताम्रेणसंबध्यते । इतरेषुक्षारोदकं जलेनतूभयत्रसमुच्चयः। शंखः । अम्लो
दकेनताम्रस्यसीसस्यत्रपुणस्तथा ॥ क्षारेणशुद्धिःकांस्यस्यलौहस्यचविनिर्द्दिशेत् ॥ एतदपिस्नेहादिलेपयुक्तविषयं।पैठीनसिः । त्रपु
सीसकानांगोमयतुषैः । तथाउच्छिष्टस्नेहसंस्पर्शेक्षारोदकाभ्यामब्जस्यच अब्जस्यशंखशुक्त्यादेः । बौधायनः । तैजसानान्तुपात्राणामु
च्छिष्टोपहतानांत्रिःसप्तकृत्वःपरिमार्जनं। परिमार्जनेद्रव्याणिमृद्गोमयभस्मानि।मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानांपुनःकरणंगोमूत्रेवा
सप्तरात्रंपरिस्थापनंमहानद्यांवा । एवमश्ममयानांच । अलाबूबिल्ववैदलानांगोबालैःपरिमार्जनंनलवेणुकुशस्थूणानांगोमयोदकेनप्रक्षा
लनंत्रिःसप्तकृत्वःपरिमार्जनमेकविंशतिवारानित्यर्थः।वैदलानांवेणुदलादिनिर्मितानामित्यर्थः।शातातपः। गवाघ्रातेषुकांस्येषुशूद्रोच्छि
ष्टेषुवापुनः । दशभिर्भस्मभिःशुद्धिःश्वकाकोपहतेषुच ॥ अंगिराः । गंडूषंपादशौचंचयःकुर्यात्कांस्यभाजने । भूमौनिक्षिप्यषण्मा
सान्पुनराकरमाविशेत् ॥ यइत्यार्षत्वात् विभक्तिव्यत्ययेनसप्तम्यर्थेप्रथमा । आकरमाविशेत् अग्नौदहेत् । शंखः । सूतिको
च्छिष्टभांडस्य सुरामद्यहतस्यच । त्रिःसप्तमार्जनैःशुद्धिर्नतुकांस्यस्यभाजने ॥ भांडस्यभाजनस्यसौवर्णादेः । सुरागौडीपैष्टीमाध्वी
त्रिधा । तद्व्यतिरिक्तंपनसादिसंभवंमद्यम् । ताभ्यांचोपहतस्यत्रिःसप्तमार्जनैरेकविंशतिमार्जनैःशुद्धिः । कांस्यस्यतुनेयंशुद्धिः ।
किंतुसकृदुपहतेअग्नौप्रतापनं।एभिरसकृदुपघातेपुनर्घटनेनशुद्धिः। शंखः ।ब्रह्मक्षत्रविशांचैवसकृत्संमार्जनाच्छुचिः । चतुर्थेनतुयद्भुक्तंच
तुर्भिरथमार्जितं ॥ अग्नौनिक्षिप्यगृह्णीयाद्धस्तौप्रक्षाल्ययत्नतः । गोशृंगेणतुसंस्पृष्टंतत्पात्रंशुचितामियात् ॥ ब्रह्मक्षत्रविशांयस्मि
न्भाजनेभोजनंकृतं ॥ तत्तत्सकृन्मार्जनाच्छुचीत्यर्थः । चतुर्थेनशूद्रेणतुब्राह्मणादीनांयद्भुक्तंतच्चतुर्वारमार्जनादिभिःशुद्ध्यतीत्यर्थः ।

८

तदियंसर्वैकवाक्यतयातैजसद्रव्यशुद्धौव्यवस्था । सुवर्णरूप्यशंखाश्मशुक्तिरक्तकांस्यपित्तललोहरंगसीसकमयानिभाजनानिकेवले
नजलेनशुद्ध्यंति । उच्छिष्टादिलेपयुक्तानिक्षारोदकाम्लोदकाभ्यांयथायोग्यंशुद्ध्यंति । शूद्रोच्छिष्टेनाचिरकालोपघातेवारत्रयंक्षारो
दकक्षालनानंतरंवन्हौयावत्सहनंक्षेपाच्छुद्ध्यंति।एकवारंश्वकाकशूद्रोच्छिष्टदूषितानिगवाघ्रातानिचकांस्यानिदशवारंक्षारोदकमार्जना
च्छुद्ध्यंति।अनेकवारंश्वकाकशूद्रोच्छिष्टदूषितानिएकविंशतिवारक्षारोदकमार्जनाच्छुद्ध्यंति।त्रैवर्णिकस्ययस्मिन्भाजनेशूद्रोभुंक्तेत
च्चतुर्भिःक्षारैर्मार्जनानंतरमग्नौप्रक्षिप्तंप्रक्षालितहस्ताभ्यांगृहीतंशुद्ध्यति । सूतिकोच्छिष्टंमद्यसुराभिःसकृदुपहतंकांस्यभाजनमग्नौ
प्रतापनाच्छुद्ध्यति । असकृदुपहतंपुनर्घटनेनशुद्ध्यति । गंडूषपादशौचेयस्मिन्कांस्यभाजनेतत्षण्मासनिखननानंतरंवन्हौप्रताप
नाच्छुद्ध्यति । मूत्रपुरीषरेतःप्रभृतिभिः शारीरैर्मलैरल्पकालमुपहतानितैजसपात्राणिसप्तरात्रंगोमूत्रेमहानद्यांवास्थापनात् शुद्ध्यं
ति । अनेकवारंमूत्राद्युपहतानिशवसूतिकारजस्वलोपहतानिचवारत्रयंक्षारोदकप्रक्षालनानंतरंयावत्सहनमग्नौप्रतापनात्शुद्ध्यंति ।
चिरकालंव्याप्यवारंवारंमूत्रादिभिरुपहतानिपुनर्घटनेनशुद्ध्यन्ति । देवलः ।लोहानांदहनाच्छुद्धिर्भस्मनागोमयेनवा। दहनात्खननाद्वा
पिशैलानामंभसापिवा॥काष्ठानांतक्षणाच्छुद्धिर्मृद्गोमयजलैरपि । मृण्मयानांतुपात्राणांदहनाच्छुद्धिरिष्यते ॥ अत्रदहनादित्यत्यंतो
पघातविषयं । अन्यथा भस्मनागोमयेनवाशैलंशिलाभाजनंतत्रापिअत्यंतोपघातेदहनेनखननेनवाअन्यथाजलेनकाष्ठभाजनानाम
पिसलेपोपघातेतक्षणादन्यत्रजलेनैवेतिव्यवस्था । मृण्मयानामत्यंतानुपहतानांपुनः पाकः।अत्यंतोपहतानांमृण्मयानांदारवाणांचत्या
गः । तथाचविष्णुः । दारवंमृण्मयंचजह्यात् । तच्चात्यंतोपहतमिति पूर्वप्रस्तुतम् । कश्यपः । सिकताभिर्दन्तशृंगशंखशुक्तीनांसिकता

भिर्जलयुक्तवालुकाभिः। अत्यंतोपघातविषयंचेदं । अन्यथाकेवलजलेनशुद्धिः । शुद्धिरित्यनुवृत्तौ हारीतः । अद्भिःकांचनराजतानां
तद्गुणवर्णयोगात् स्नेहवैवर्ण्योपहतानामेवगोधूमकलायमाषगोमयचूर्णैर्मार्जनंगोरोचनादिभिः प्रक्षालनं।अम्ललवणाभ्यांताम्राणां।भस्म
नाकांस्यानां।शाणघर्षणैः कार्ष्णायसानां।सिकतावघातकर्षणैः शैलानां।शैलावघर्षमार्जनैर्मणिमयानां।निर्लेपनैर्दारुमयानां । पुनःपाके
नमृण्मयानां । गोमूत्रगोमयबिल्वैर्वेणुदलानां । गोवालरज्ज्वासोदकपानैर्दलपात्राणां। मार्जनंकमंडलूनां यतिपात्राणांच ।क्षारोदकाभ्यां
कार्पासशणमयानां । पुत्रजीवारिष्टकैः क्षौमदुकूलानां । पुत्रजीवोदास्विद्भिश्चीराणां । श्रीफलश्वेतसर्षपैः कौशेयानां । उदास्विद्गलमी
कमृदासर्षपैः ऊर्णानां ।स्नेहसक्तुकुलमाषोद्वर्त्तनैर्गुरूणां । अयमर्थः । तद्गुणवर्णयोगात् । तद्गुणोयोवर्णः तेनयोगः । अनुपकृतत्वंतत्रकां
चनादीनामद्भिः केवलाभिः शुद्धिः । सुव्यक्तमन्यत् । पुत्रजीवः पितरजत्रिआ । अरिष्टः अरिडइतिप्रसिद्धः । उदस्वित् तक्रं । कुल्मा
षःचोडाइतिप्रसिद्धइतिरत्नाकरः । अत्रचपुत्रजीवादिभिश्चूर्णितैः शोधनंयोग्यत्वात्। क्षौमादयः पट्टवस्त्रभेदाः । गुरूणामितिऊर्णा
मयानामेवमहतांकेवलानामित्यर्थः । एषाचशुद्धिरेषांवस्त्राणांमलवत्त्वेसतिअन्यथाकेवलजलेनशुद्धिः । तथाचदेवलः । तांतवंम
लिनंपूर्वमद्भिः क्षारैश्वशोधयेत् । अंशुभिः शोधयित्वावापुनर्वासःसमाहरेत् ॥ ऊर्णापट्टांशुकक्षौमदुकूलाविकचर्मणां । अल्पाशौ
चेभवेच्छुद्धिः शोषणप्रोक्षणादिभिः ॥ तान्येवामेध्यलिप्तानिनिज्याद्गौरसुसर्षपैः । धान्यकल्कैःपर्णकल्कैरसैश्वफलवल्कलैः ॥
तूलिकाद्युपधानानिपुष्परक्तांबराणिच । शोधयित्वातपेर्तिंकचित्करैरुन्मार्जयेन्मुहुः । पश्चाच्चवारिणाप्रोक्ष्यशुचीत्येवमुदाहरेत् ॥
तान्यप्यातिमलिष्ठानियथावत्परिशोधयेत् ॥ शातातपः ॥ कुसुंभकुंकुमारक्तास्तथालाक्षारसेनच । प्रक्षालनेनशुध्यंतिचांडालस्प

र्शनेतथा ॥ अंगिराः ॥ शौचंसहस्त्ररोमाणांवाय्वग्न्यर्केन्दुरश्मिभिः । रेतःस्पृष्टंशवस्पृष्टमाविर्कंनैवदुष्यति । शयनासनानियानानिरो
मबद्धानियानिच ॥ वस्त्राण्येतानिसर्वाणिसंहतानिप्रचक्षते । सहस्त्ररोमाणामितिऊर्णादिरोमनिर्मितानामित्यर्थः । रोमबद्धानिकंबलादी
निसंहतानिशयनादीनिचतानिचवाय्वादिभिः शुद्ध्यन्तीत्यर्थः । उशनाः । कौशेयानांगौरसर्षपकल्केनमृद्भिश्चान्येषां । ब्रह्मपुराणे ।
प्रत्यहंक्षालयेद्वस्त्रंदैवेपित्र्येचकर्मणि । सर्वैर्विण्मूत्रशुक्रैस्तुदूषितश्चमृदम्बुभिः॥मृदम्बुभिः शुद्ध्यतीतिशेषः।विष्णुः। अत्यंतोपहतस्य
यत्प्रक्षालितंसन्नविरज्यतेतच्छिन्द्यात् । बृहस्पतिः । वस्त्रवैदलचर्मादेः शुद्धिःप्रक्षालनंस्मृतं । अतिदुष्टस्यतन्मात्रंत्यजेच्छित्त्वा
तुशोधयेत् । यमः । कृष्णाजिनानांबालैश्चबालानांमृद्भिरंभसा । गोमूत्रेणास्थिदन्तानांक्षौमाणांगौरसर्षपैः॥वालानांचाम
राणामित्यर्थः । शंखः । सिद्धार्थकानांकल्केनदन्तशृंगमयस्यच । गोवालैःफलपात्राणामस्थ्नांस्याच्छृंगवत्तथा ॥ फलपात्रा
णांनालिकेरादिप्रभवाणाम् । अस्थ्नांशंखादीनांतेषांचेयंशुद्धिरल्पोपघातेऽत्यन्तोपघातेऽवलेखनंवायुपुराणोक्तं । तथा । निर्या
सानांगुडानांचलवणानांतथैवच । कुसुंभकुसुमानांचऊर्णाकार्पासयोस्तथा ॥ प्रोक्षणात्कथिताशुद्धिरित्याहभगवान्यमः ॥
मनुः । मार्जनंयज्ञपात्राणांपाणिनायज्ञकर्मणि । चमसानांगृहाणांचशुद्धिःप्रक्षालनेनच ॥ चरूणांस्रुक्स्रुवाणांचशुद्धिरु
ष्णेनवारिणा । स्फ्यशूर्पशकटानांचमुसलोलूखलस्यच ॥ अद्भिस्तुप्रोक्षणंशौचंबहूनांधान्यवाससां । प्रक्षालनेनस्वल्पा
नामद्भिरेवविधीयते ॥ चैलवच्चर्मणांशुद्धिर्वैदलानान्तथैवच । शाकमूलफलानांचधान्यवच्छुद्धिरिष्यते । प्रोक्षणात्तृणकाष्ठानां
पलालंचाविशुद्ध्याति । मार्जनोपांजनैर्वेश्मपुनःपाकेनमृण्मयम् ॥ उपांजनंवायुपुराणे । मणिवज्रप्रवालानांमुक्ताशंखोपलस्य

च । सिद्धार्थकानांकल्केनतिलकल्केनवापुनः।सिद्धार्थकाःसर्षपाः ॥ बौधायनः । आसनंशयनंयानंनावःपंथास्तृणानिच । मरुतार्केण
शुद्ध्यंतिपक्वेष्टकचितानिच ॥ आसनंशयनंवस्त्रंजायापत्यंकमण्डलुः । शुचीन्यात्मनएतानिपरेषामशुचीनिच ॥ हारीतः ॥ पय
सादांतानांक्रीतानामवहननोत्पवनैःव्रीहियवगोधूमानांघर्षणदलनपेषणैःशमीधान्यानांकंडनविमृशनप्रक्षालनैःफलीकृतानांघर्षणप्रक्षा
लनपर्यग्निकरणैःशाकमूलफलानांभूस्थग्रहणेप्रक्षालनैरिक्षुकाण्डानांशमीधान्यवत् यज्ञहविषांश्रपणमेवस्नेहानांपुनःपाकःकृतलवणा
नां पुष्कलादिभिःस्पृष्टानांभूस्थानांतृणकाष्ठानामादित्यदर्शनाच्छौचं । दांतानांदंतनिर्मितानांक्रयोपात्तानांव्रीहियवादीनांशमीधा
न्यानांमुद्गादीनांशिबीप्रभवानांफलीकृतानांतण्डुलानां अवहननंकंडनंउत्पवनंप्रस्फोटनं शूर्पेणनिस्तुषीकरणंपर्यग्निकरणंतदुपरिअग्नि
भ्रामणमित्यर्थः । शुद्धिरित्यनुवृत्तौ । विष्णुः । गुडादीनामिक्षुविकाराणांप्रसूतानांवाय्वग्निदानेनसर्वलवणानांच तथाद्रव्यवत्कृतशौ
चानांदेवतार्चानांभूयः प्रतिष्ठापनेन असिद्धान्नस्ययावन्मात्रमुपहतंतावन्मात्रंपरित्यज्यशेषस्यकंडनक्षालनेकुर्यात् । देवतार्चादेवप्र
तिमातस्याअस्पृश्यादिस्पृष्टायाः कृतप्रकृतिद्रव्यस्यताम्रादेः यथोक्तंशौचंकृत्वापुनः प्रतिष्ठापनेनशुद्धिः पूजार्हत्वमित्यर्थः । अतिम
लिनानुवृत्तौ देवलः । सर्वद्रव्याणांपक्वानांलवणस्यगुडस्यच ॥ नान्यच्छौचंपरित्यागादशुद्धानामितिस्थितिः ॥ तोयाभावेपरस्पर्शेभूमि
संवेशनेपिच॥कुंडिकायाः परित्यागेदहनंचापदिस्मृतं॥कुंडिकाकमंडलुस्तस्याश्चतोयहीनायाअशुचिस्पृष्टायाअशुद्धभूमिधृतायाश्चप
रित्यागः कुंडिकांतरालाभेदग्ध्वाग्राह्या । तथा । द्रव्याणामवशिष्टानांतोयाग्निभ्यांविशोधनं । शोधनार्थंतुसर्वेषामुभयंब्राह्मणैः
स्मृतं ॥ श्वपाकोयत्स्पृशेद्द्रव्यंमृण्मयंद्रव्यमेववा ॥ पक्वंवाभोज्यकल्पंवातत्सर्वंपरिवर्जयेत् । भोज्यकल्पमर्द्धपक्वं ॥ उच्छिष्टाशुचि

भिः स्पृष्टमद्रवंशोध्यतेंभसा । द्रवंवापिप्रभूतंचशोधयेत्प्रोक्षणादिभिः । उच्छिष्टाशुचिभिःउच्छिष्टत्वेनाशुचिभिः । वृद्धशातातपः ।
तापनंघृततैलानांप्लावनंगोरसस्यच । तन्मात्रमुद्धृतंशुद्धचेत्कठिनंतुपयोदधि ॥ अविलीनंतथासर्पिर्विलीनंश्रपणेनतु । बौधायनः ।
बहूनांकुसुंभकर्पासगुडलवणानांसर्पिषांकठिनीभूतानांश्वचांडालादिस्पर्शेप्रोक्षणेनैवशुद्धिः । ब्रह्मपुराणे । द्रवद्रव्याणिभूरीणिपरि
प्लाव्यानिचांभसा । सस्यानिव्रीहयश्चैवशाकमूलफलानिच ॥ त्यक्त्वातुदूषितंभागंप्लाव्यान्यथजलेनतु ॥ विष्णुः । प्रोक्षणेनचपुस्त
कं । मनुः । यावन्नापैत्यमेध्याक्ताद्गन्धोलेपश्चतत्कृतः।तावन्मृद्वारिचादेयंसर्वासुद्रव्यशुद्धिषु॥वृद्धशातातपः। अशुचिंसंस्पृशेद्यस्तुएक
एवसदुष्यति । तंस्पृष्ट्वान्योनदुष्येत्तुसर्वद्रव्येष्वयंविधिः ॥ संहतानांतुपात्राणांयदेकमुपहन्यते । तस्यतच्छोधनंप्रोक्तंनतुतत्स्पृष्टि
नामपि।अत्राशुचिस्पृष्टस्यस्पर्शेयदशौचंनिषिद्धंतच्चांडालादिस्पृष्टदर्शनादन्यत्र । तेषांतुस्पृष्टस्पर्शेयथायथमाचमनस्नानादिकमुक्तमे
व । अथात्यंतोपहतशुद्धिः । तत्रविष्णुः । शारीरैर्मलैःसुराभिर्मद्यैर्वायदुपहतं अत्यंतोपहतंसर्वलोहभांडमग्नौप्रततंशुद्धचेत् ।
मणिमयमश्ममयमब्जमयंचसप्तरात्रंमहीनिखननेनदंतशृंगास्थिमयंच तक्षणेनदारवंमृण्मयंचजह्यात् । अत्यंतोपहतस्यवस्त्रस्ययत्
प्रक्षालितंसत्नविरज्येतताच्छिन्द्यात्। लोहभाण्डंसुवर्णाद्यष्टधातुमयभाजनमितिरत्नाकरः।सुरागौडीपैष्टीमाध्वीत्रिविधातादितरसुरामद्यं
शारीराणिमलानिद्वादशविधानिवसादीनि । बौधायनः । अतैजसानामत्यंतोपहतानांचत्यागः । एषचत्यागोविष्णूक्तमणिमयादिभाज
नवर्जम् । शंखः । मद्यैर्मूत्रपुरीषैश्चश्लेष्मपूयाऽश्रुशोणितैः । संस्पृष्टंनैवशुद्धचेतपुनः पाकेनमृण्मयं । एतैरेवतथास्पृष्टंताम्रसौ
वर्णराजतम् । शुद्धचत्यावर्तितंपश्चादन्यथाकेवलांभसा ॥ अत्रचतैजसेव्यवस्था।प्रथममेवदर्शिताद्रव्यशुद्धिप्रकरणे । देवलः ।

दूषितंवर्जितंदुष्टंकश्मलंचेतिलिंगिनाम् । चतुर्विधममेध्यंचसर्वव्याख्यास्यतेपुनः । लिङ्गिनामाश्रमिणामित्यर्थः । शुच्य
प्यशुचिसंस्पृष्टंद्रव्यंदूषितमुच्यते । अभक्ष्यभोज्यपेयानिवर्जितानीहचक्षते ॥ त्यक्तः पतितचाण्डालौग्रामकुक्कुटशूकरौ ।
श्वाचनित्यंविवर्ज्याःस्युःषडेतेधर्मतःसमाः ॥ सव्रणःसूतकीसूतीमत्तोन्मत्तरजस्वलाः ॥ मृतबंधुरशुद्धश्चवर्ज्यान्यष्टौस्वका
लतः ॥ सूतीप्रसूतिका । अशुद्धःपुरीषादिना । स्वेदाश्रुबिंदवःफेनोनिरस्तनखलोमच । आर्द्रंचर्मासृगप्येतद्दुष्टमाहुर्मनीषिणः ॥मानुषा
स्थिशवंविष्ठारेतोमूत्रार्त्तवानिच ॥ कुणपंपूयमित्येतत्कश्मलंसमुदाहृतम् । दूषितेप्रोक्षणेनापिशुद्धिःसूक्ताविधानतः ॥ दुष्टैर्मार्जन
संस्कारैःकश्मलैःसर्वथाभवेत् ॥ दुष्टैश्चसम्बन्धेकश्मलैश्चसंबंधेद्रव्यमार्जनसंस्कारैः शुद्धिरित्यर्थः।संस्कारास्तुतत्रतत्रोक्ताः ॥ इतितै
जसादिद्रव्यशुद्धिः॥अथपक्वान्नशुद्धिः।ब्रह्मपुराणे ॥ पक्वमन्नंगवाघ्रातंमक्षिकाकेशदूषितम् । छागघ्रातंतुतत्कृत्वाकृत्वारत्नांबुभिःसह ॥
गवाघ्रातादिकमन्नंछागघ्रातंकृत्वारत्नांबुभिःसहसाहितंकृत्वाशुद्ध्यतीत्यर्थः । भुंजतश्चापियच्चान्नंमक्षिकाकेशदूषितं। रजःपिपीलिकाजुष्टं
यच्चस्पृष्टमवक्षुतैः ॥ तदयन्तुविहायैवशेषंक्षारांबुभिःशुचि ॥ यमः।मक्षिकाकेशमन्नेषुपतितंयदिदृश्यते । मूषकस्यपुरीषंवाक्षुतं
यच्चावधूनितं ॥ भस्मनास्पृश्यचाश्नीयादभ्युक्ष्यसलिलेनच । क्षुतंयस्योपरिछिक्काकृता । अवधूनितंमुखश्वासोपहतम् । भस्मना
वेतिवाशब्दःसमुच्चये वाक्यांतरैक्यात् । तेनभस्मजलाभ्यांस्पृष्टंशुद्ध्यतीत्यर्थः । तथा । अवक्षुतंकेशपतंगकीटैरुदक्ययावापतितैश्च
दृष्टं ॥ अलातभस्मांबुहिरण्यतोयैःसंस्पृष्टमन्नंमनुराहभोज्यं ॥ अवक्षुतंयस्योपरिछिक्काकृता उदक्ययारजस्वलया अलातभस्मेति
शुद्धस्थानभस्मोपलक्षणार्थं । तथा । मक्षिकादंशमशकाघूणाःसूक्ष्माःपिपीलिकाः।आमिषामेध्यसेवीचनैतेकीटाविपत्तये ॥ आमि

षामेध्यसेवीसटिनमांसोद्भवःकीटःएतेकीटाविपत्तयेअन्नदोषायनभवंतीत्यर्थः।शुद्धिस्तुभस्मादिनैवेतिभावः। शातातपः।केशकीटगवा
घ्रातंवायसोपहतंचयत्। क्लीबाभिशस्तपतितैःसूतिकोदक्यनास्तिकैः ॥दृष्टंवास्याद्यदन्नंतुतस्यनिष्कृतिरुच्यते ॥ अभ्युक्ष्यकिंचिदुद्धृ
त्यभुंजीताप्यविशंकितः ॥ भस्मनाचापिसंस्पृश्यसंस्पृशेदुदकेनवा। सुवर्णरजताभ्यांवाभोज्यंघ्रातमजेनवा। तथा। श्वशूकरखराष्ट्रै
श्चयदालीढंतुजतुंभिः।अग्रंविहायतत्पश्चात्संस्पृष्टव्यमथाग्निना। छागघ्रातंततःशुद्धं स्याद्धेमजलसंयुतं। तथा। घृतंतुपायसंक्षीरंतथै
वेक्षुरसोद्भवं। शूद्रभांडगतंतक्रंतथामधुनदुष्यति ॥ पायसंपयोविकारोदध्यादीतिरत्नाकरः। कल्पतरुप्रभृतयोप्येवम्। एवंच। कटुपक्वं
स्नेहपक्वंपायसंदधिसक्तवः। एतान्यशूद्रान्नभुजोभोज्यानिमनुरब्रवीत् ॥ कटुपक्वानितैलेनपायसंदधिसक्तवः ॥ द्विजैरेतानिभोज्यानि
शूद्रगेहकृतान्यपीति॥हारीतकूर्मपुराणयोरपिवाक्ययोःपायसपदंदधीतराद्यामिक्षादिपयोविकारपरं।बौधायनः। त्वक्केशलोमनखा खुपु
रीषानिदृष्ट्वातद्देशपिंडानुद्धृत्यअद्भिरभ्युक्ष्यभस्मनावकीर्यपुनरपिप्रोक्ष्यवाचाप्रशस्तमुपभुंजीतसिद्धहविषांमहतांश्ववायसप्रभृत्युपह
तानांतद्देशपिंडमुद्धृत्यपचमानःसुवर्चसइत्येतेनानुवाकेनाभ्युक्षणंमधूदकेपयोविकारेचपात्रात्पात्रांतरानयनेएवतैलसर्पिषीउच्छिष्टसं
बंधारब्धेतूदकेचोपधायोपयोजयेत्। उपधायपात्रांतरे निक्षिप्य।उशनाः। अजाघ्रातेनान्नाद्यानांस्नेहघृतलवणमधुगुडानांपुनः पाकेन।
अन्नाद्यानामदनीयानामन्नानामित्यर्थः। वृद्धमनुः। देवद्रोण्यांविवाहेचयज्ञेषुप्रकृतेषुच। काकैः श्वभिश्चयत्स्पृष्टंतदन्नंनैवदुष्यति।
तन्मात्रमन्नमुद्धृत्यशेषंसंस्कारमर्हति ॥ घनानांप्रोक्षणाच्छुद्धिर्द्रवाणामग्नितापनात्। संस्पर्शनाद्भवेच्छुद्धिरपामग्नेर्घृतस्यच ॥
छागेनप्रथमंस्पृष्टंशुचित्वेनविनिर्दिशेत्। देवद्रोणीग्रहणमन्नबहुत्वप्रदर्शनार्थं। प्रकृतेषुउत्सवेष्वित्यर्थः। यमः। शुक्तानिहिद्वि

जोन्नानिनभुंजीतकदाचन । प्रक्षालयित्वानिर्दोषाण्यापद्धर्मोयदाभवेत् । शुक्तानिपर्युषितत्वाद्यान्यम्लतांगतानि । तथैवाचारात् ।
यदातुआपद्धर्मोअन्यान्नासंभवस्तदातानिप्रक्षाल्यनिर्दोषानिसंपन्नानिभुंजीतेत्यध्याहारेणान्वयः । मसूरामाषसंयुक्तंतथापर्युषितंचय
त् । तत्तुप्रक्षालितंकृत्वाभुंजीताज्याभिघारितं । मसूरोप्यत्राभक्ष्यएवसाहचर्यात् । माषोत्रराजमाषः । देवलः । भक्तधान्या
दिराशीनामेकदेशस्यदूषणे । तावन्मात्रंसमुद्धृत्यशेषंप्रोक्षणमर्हति । भक्तराशिर्द्रोणाधिकः । विष्णुः । द्रोणादभ्यधिकंसिद्धमन्नं
नैवचदुष्यति । तस्योपहतमपास्यगायत्र्यभिमंत्रितंसुवर्णांभःक्षिपेतबस्तस्यदर्शयेत् । अग्नेश्चद्रोणः । षोडशप्रस्थाः ।
बस्तःछागः । बृहस्पतिः । तीर्थेविवाहेयात्रायांसंग्रामेदेशविप्लवे । नगरग्रामदाहेच स्पृष्टस्पृष्टिर्नदुष्यति ॥ आपद्यपिचकष्टायां
रुग्भयेपीडनेसदा । मातापित्रोर्गुरोश्चैवनिदेशेवर्त्तनात्तथा ॥ आममांसंघृतंक्षौद्रंस्नेहाश्चफलसंभवाः । म्लेच्छभांडगतादूष्यानिष्क्रां
ताःशुचयःस्मृताः ॥ शातातपः । गोकुलेकंदुशालायांतैलयंत्रेक्षुयंत्रयोः । अमीमांस्यानिशौचानिस्त्रीषुबालातुरेषुच । अमीमां
स्यानिशौचाशौचभागितिनविचारणीयानीत्यर्थः । बालःपंचवर्षाभ्यंतरवयस्कः । अथभूमिशुद्धिः । तत्रदेवलः । पचधावाचतुर्धा
वाभूरमेध्याविशुद्ध्यति । दुष्टाद्विधात्रिधावापिशोध्यतेमलिनैकधा ॥ दहनंखननंभूमेरुपलेपनवापनम् । पर्जन्यवर्षणंचेतिशौचंपं
चविधंस्मृतं ॥ अस्यार्थः । भूमिस्तावत्त्रिधाअपवित्राभवति । अमेध्यादुष्टामलिनाचेति । तत्रामेध्यायादहनादिभिःपंचभिश्चतु
र्भिर्वाशुद्धिः । दुष्टायाः दहनादिभिस्त्रिभिः । खननलेपनाभ्यांद्वाभ्यांमलिनायाः । एकधाउपलेपनेनशुद्धिः । वापनंमृदंतरेण
पूरणं । तासुअमेध्यामाह । प्रसूतेगर्भिणीयत्रम्रियतेयत्रमानुषः ॥ चांडालैरुषितंयत्रयत्राविन्यस्यतेशवः ॥ विण्मूत्रोपहतंयच्चकु

णपोयत्रदृश्यते । एवंकश्मलभूयिष्ठाभूरमेध्येतिलक्ष्यते ॥ दुष्टामाह ॥ कृमिकीटपदक्षेपैर्दूषितामेदिनीयदि । द्रप्सापकर्षणैःक्षितैर्वा
तैर्वादुष्टतांव्रजेत् ॥ द्रप्संघनीभूतंश्लेष्मादिमलं । मलिनामाह ॥नखदंततनूजत्वक्तुषपांसुरजोमलैः । भस्मपंकतृणैर्वापिप्रच्छन्नामलि
नाभवेत् ॥ तनूजंलोम ।अत्रचउपघातालपत्वभूयस्त्वाभ्यां पंचधावाचतुर्धावाइत्यादिविकल्पोव्यवस्थितः। याज्ञवल्क्यः। भूशुद्धिर्मार्ज
नाद्दाहात्कालाद्गोक्रमणादपि । सेकादुल्लेखनाल्लेपाद्गृहंमार्जनलेपनात् ॥ अवकरानिरसनंमार्जनम् । कालोयावताकालेनापावित्र्यहेतुले
पक्षयो भवतितावान्सेकोजलेनप्रक्षालनं । उल्लेखनंतक्षणं । गृहस्यपृथगुपादानंमार्जनलेपनयोः प्रतिदिनप्राप्त्यर्थं । मनुः । संमार्जने
नांजनेनसेकेनोल्लिखनेनच । गवांचपरिवासेनभूमिःशुद्ध्यतिपंचभिः ॥ अंजनंगोमयोपलेपनं । अत्रानिर्लेपसलेपाधिकलेपापेक्षयायथा
योग्यंप्रत्येकंसमुदायाभ्यां व्यवस्था । यमः । खननात्पूरणाद्दाहाल्लेपनादभिवर्षणात् । गोभिराक्रमणात्कालाद्भूमिः शुद्ध्यतिसप्तभिः ।
बौधायनः।घनाया भूमेरुपलेपनंसुषिरायाःकर्षणंक्लिन्नायाश्चामेध्यमाहृत्यप्रच्छादनं । घनानिबिडा । अविषमेतियावत्।सुषिरासच्छिद्राविं
षमेतियावत् ।क्लिन्नाअमेध्यार्द्रातस्याश्चामेध्यमाहृत्यआकृष्यप्रच्छादनंशुद्धमृदंतरेणपूरणं।संवर्त्तः।गृहशुद्धिंप्रवक्ष्यामिअन्तःस्थशवदूषि
ते।प्रोत्सृज्यमृण्मयंभांडंसिद्धमन्नंतथैवच ॥ गृहादपास्यतत्सर्वंगोमयेनोपलेपयेत्॥गोमयेनोपलिप्याथछागेनाघ्रापयेद्बुधः।ब्राह्मणैर्मंत्रपूतै
श्चहिरण्यकुशवारिणा। सर्वमभ्युक्षयेद्वेश्मततःशुद्ध्यत्यसंशयं।यमः। ब्राह्मणावसथेभूमिर्देवागारेतथैवच॥मेध्यांचैवसदामन्येगवांगोष्ठेतथै
वच।एतेषुयाभूमिस्तांमेध्यांमन्येदित्यर्थः।अनुपहतविषयंचैतत् । ब्रह्मपुराणे।देवानांप्रतिमाश्चापिवेश्मान्यायतनानिच।बाह्यमाभ्यंतरंश ॥ २३ ॥
ल्यंभूमेरुद्धृत्यशास्त्रवत् ॥ ततस्तोयेनगोभिश्चदाहोल्लेखनमार्जनैः।शोधनीयाचमंत्रैश्चसरत्नैःपंचभिश्चभूः॥उद्धृत्यमृत्तिकाप्लाव्यापवित्रेणज

लेनच॥ग्रामाद्दंडशतंत्यक्त्वानगराच्चचतुर्गुणम्॥भूमिःसर्वत्रमेध्यास्याद्यत्रलेपोनदृश्यते।मरीचिः।गृहेष्वजातिसंवेशेशुचिःस्यादवलेपना
त्।संवासोयदिजायेतदाहतापौविनिर्दिशेत्॥अजातिश्चांडालः संवेशेप्रवेशे संवासोऽवस्थितिः।याज्ञवल्क्यः। रथ्याकर्द्दमतोयानिस्पृष्टा
न्यंत्यश्ववायसैः।मारुतार्कैणशुद्ध्यंतिपक्वेष्टकचितानिच॥ अंत्यश्चांडालः।तथा॥ पंथानश्चविशुद्ध्यंतिसोमसूर्यांशुमारुतैः।निर्लेपविष
यमेतत्। बौधायनः।अनेकोद्वाह्येदारुशिलेभूमिसमेइष्टकाश्चसंकीर्णीभूताःसंकीर्णीभूताः।परस्परंसंबद्धाइत्यर्थः।पराशरः। रथ्याकर्दमतो
यानिनावःपंथास्तृणानिच। स्पर्शनान्नप्रदुष्यंतिपक्वेष्टकचितानिच॥ अथोदकशुद्धिः।मनुः।आपःशुद्धाभूमिगतावितृष्णायत्रगौर्भवेत्।
अव्याप्ताश्चेदमेध्येनगंधवर्णरसान्विताः॥विष्णुः।भूमिष्ठमुदकंशुद्धंवितृष्णायत्रगौर्भवेत्। अव्याप्तंचेदमेध्येनतद्वद्देवशिलागतं॥देवलः।
उद्धृतावाप्रशस्यंतेशुद्धैः पात्रैर्यथाविधि। एकरात्रोषितास्तास्तुत्यजेदापःसमुद्धृताः॥ एकरात्रोषिताइत्यत्रपर्युषितत्वमात्रेतात्पर्यं।
तथा। अदुष्टानामपांनास्तिप्रसृतानांचदूषणम्। स्तोकानामुद्धृतानांचकश्मलैर्दूषणंभवेत्॥ प्रसृतानांपर्वतनिर्झररूपाणां।
तथा। तत्राक्षोभ्यतडागादिनदीवाप्यःसरांसिच। कश्मलाशुचियुक्तानितीर्थतःपरिवर्जयेत्। कश्मलंशवादिअशुचिविण्मूत्रा
दितीर्थतइति सप्तम्यंतात्तसिल् तेनकश्मलाशुचियुक्तानिचतीरदेशेवर्जयेदित्यर्थः। शंखलिखितौ। आपोरूपरसगंधवत्यःपरिशु
द्धाजीर्णचर्मकरंडकैरप्युद्धृताःचर्मकरंडश्चर्मपुटः। यमः। प्रपामरण्येघटकंचकूपेद्रोण्यंजलंकोषगतास्तथापः। ऋतेपिशूद्रात्तदपे
यमाहुरापद्गतोभूमिगताःपिबेत्तु। प्रपास्थितंजलंघटिकंघटकास्थितंजलं घटकोऽत्रकूपादौसर्वसाधारणंजलोद्धारपात्रंकलशादितज्जलं
द्रोणीकाष्ठांबुवाहिनी कूपादावेवगवादिजलपानार्थकोशश्चर्मपुटःऋतेपिशूद्रात्। शूद्रेतरस्वामिकंद्विजस्वामिकमपिशूद्रस्वामिकम

पिचप्रपादिस्थितंजलमित्यर्थः । हारीतः । रात्रावेतावरुणंप्रविशंतितस्मान्नरात्रौगृह्णीयात् । धाम्नोधाम्नइत्यग्निमुपरिष्टाद्धारयन्गृ
ह्णीयात् । बृहस्पतिः । उच्छिष्टंमलिनंक्लिन्नंयच्चविष्टानुलेपितम् । अद्भिःशुद्ध्यतितत्सर्वमपांशुद्धिःकथंभवेत् ॥ सूर्येन्दुरश्मि
पातेनमारुतस्पर्शनेनच ॥ गवांमूत्रपुरीषेणशुद्ध्यंत्यापइतिस्थितिः ॥ उशनाः । नद्यःकूपतडागानिसरांसिसरितस्तथा ॥ असंवृत्ता
न्यदोषाणिमनुःस्वायंभुवोब्रवीत् ॥ सरितःसरणशीलानिर्झररूपाःअसंवृत्तानिअस्पृश्यस्पृष्टान्यपीत्यर्थइतिकल्पतरुः । विष्णुः ।
मृतपंचनखात्कूपादत्यंतोपहतात्तथा ॥ अपःसमुद्धरेत्सर्वाःशेषंशास्त्रेणशोधयेत् ॥ वन्हिप्रज्वालनंकृत्वाकूपेपक्वेष्टकाचिते ॥ पंच
गव्यंन्यसेत्पश्चान्नवतोयंसमुद्धरेत् ॥ जलाशयेषुचान्येषुस्थावरेषुवसुंधरे ॥ कूपवत्कथिताशुद्धिर्महत्सुचनदूषणम् ॥ अत्रात्यंतोप
हतत्वंपुरीषादिना अतिव्याप्तत्वंनतुपारिभाषिकमत्यंतोपहतत्वं तत्रशरीरमलमात्रस्यग्रहणेअश्रुपातादावपिइयंशुद्धिःस्यात्तथाचा
तिप्रसंगःआपस्तंबेनचसकृन्मूत्राद्युपघातेशुद्ध्यंतरकथनाच्च । तथाचापस्तंबः । उपानन्म्लेच्छविण्मूत्रस्त्रीरजोमद्यमेवच । ए
भिश्चदूषितेकूपेकुम्भानांषष्टिमुद्धरेत् । कुंभानांजलपूर्णानामित्यर्थः ॥ बृहस्पतिः । श्वभिःश्वपाकचाण्डालैर्दूषितेषुविशोधनम् ।
उद्धरेदुदकंसर्वंमार्जनंपरिशोधनम् ॥ श्वपाकश्चाण्डालविशेषः । तथा । वापीकूपतडागेषुदूषितेषुविशोधनम् ॥ घटानांशतमुद्धृत्यपंचग
व्यंततःक्षिपेत् ॥ वापीसोपानयुक्तःकूपः । एवंचयत्रघटशतोद्धरणेनैवसर्वोद्धारोभवेत् तत्रैवसर्वोद्धारोभवेत् । अधिकजलेघटशतोद्ध
रणंकृत्वापंचगव्यप्रक्षेपः अतिमहत्सुतडागादिषुदोषाभावएवेतिव्यवस्था । यमः । अजागावोमहिष्यश्चब्राह्मणीचप्रसूतिका । दश
रात्रेणशुद्ध्यंतिभूमिस्थंचनवोदकं ॥ ब्रह्मपुराणे । नवखातजलंगावोमहिष्यश्छागयोनयः ॥ शुद्ध्यंतिदिवसैरेवदशभिर्न्नात्रसं

शयः ॥ मनुः । वापीकूपतडागेषुआपोग्राह्यास्तुसर्वतः ॥ पश्चातपश्येदमेध्यंतुपंचगव्येनशुध्यति । इत्युदकशुद्धिः । अथर
जस्वलाशुद्धिः । तत्रमनुः । शुद्धाभर्तुश्चतुर्थेन्हिस्नानेनस्त्रीरजस्वला ॥ दैवेकर्मणिपित्र्येचपंचमेशुद्धिमाप्नुयात् ॥ तथा प्रथमे
हनिचांडालीद्वितीयेब्रह्मघातिनी ॥ तृतीयेरजकीप्रोक्ताचतुर्थेहनिशुध्यति ॥ अत्रचांडालीत्वाद्यतिदेशस्तत्तज्जातीयवदस्पृश्यत्वबो
धनार्थः । वसिष्ठः । रजस्वलाचत्रिरात्रमशुचिर्भवति साचनांजीतनाभ्यंजीतनाप्सुस्नायादधःशयीत नादिवासुप्यात् नमांसमश्नीयात्
नग्रहान्निरीक्षेत् नाग्निंस्पृशेत् नरज्जुंसृजेत् नदंतान्धावयेत् नहसेत् नकिंचिदाचरेत् नखर्वेणपिबेत् नांजलिनापिबेत् नपात्रे
णलोहितायसेनचेतिविज्ञायतइति । खर्वोवामहस्तः लोहितायसंताम्रमितिरत्नाकरः । पैठीनसिः । त्रिरात्रंमलवद्वासोधारयमाणानस्ना
यात् नाभ्यंज्यात्नांज्यात् ननखान्निकृंतेत नोपमार्जयेत् नरज्जुंसृजेत् नदंतान्धावयेत् नस्रजंधारयेत् नगंधान्सेवेत ।हारीतः । भूमौ
कार्ष्णायसेपाणौमृण्मयेचाश्नीयात् । अत्रामिताक्षराकारः । दैवेकर्मणिपित्र्येचपंचमेशुद्धिमाप्नुयात् । इत्यत्रपंचमइतिरजोनिवृत्तिका
लोपलक्षणं । पंचमदिनात्पूर्वंरजोनिवृत्तावपिनशुद्धिर्दैवेपित्र्येचकर्मणि । यदातुरजोदर्शनदिनादारभ्य पुनःसप्तदशदिनाभ्यंतरेरजःसं
भवस्तदाअशुचित्वंनास्त्येव।अष्टादशदिनेरजःसंभवेत्वेकाहाच्छुद्धिः । एकोनविंशेद्व्यहात् । ततउत्तरेषुत्र्यहाच्छुद्धिः । तथाचात्रिः ।
रजस्वलायदिस्नातापुनरेवरजस्वला । अष्टादशदिनादर्वागशुचित्वंनविद्यते ॥ एकोनविंशतेरर्वागेकाहंस्यात्ततोद्व्यहम् । विंशत्प्रभृत्यु
त्तरेषुत्रिरात्रमशुचिर्भवेत् ॥ यत्तुचतुर्दशदिनादर्वागशुचित्वंनविद्यतइतिस्मृत्यंतरंतत्स्नानप्रभृतित्वमभिप्रेतमतोनविरोधः । अयंचाशु
चित्वनिषेधोयस्यांविंशतिदिने।त्तरकालमेवप्रचुररजोदर्शनंतद्विषयं । यस्याः प्रौढयौवनायाः प्रागेवाष्टादशदिनात्प्राचुर्येणरजोनिर्गम

स्तस्यास्त्रिरात्रमेवाशौचम् । पाराशरः। स्नानेनैमित्तिकेप्राप्तेनारीयदिरजस्वला ॥ पात्रान्तरेणतोयेनस्नानंकृत्वाव्रतंचरेत् ॥ व्रतं
रजस्वलानियमंचरेदित्यर्थः ॥ सिक्तगात्राभवेदद्भिः सांगोपांगाकथंचन ॥ नवस्त्रपीडनंकुर्यान्नान्यद्वासश्चधारयेत् ॥ उशनाः । ज्वरा
भिभूतायानारी रजसाचपरिप्लुता ॥ कथंतस्याभवेच्छौचंशुद्धिःस्यात्केनकर्मणा॥चतुर्थेहनिसंप्राप्तेस्पृशेदन्यांतुसास्त्रियं॥सासचैलावि
गाह्यापः स्नात्वास्नात्वापुनः स्पृशेत् ॥ दशद्वादशकृत्वोवा आचामेतपुनःपुनः ॥ अंतेचवाससांत्यागस्ततः शुद्धाभवेत्तुसा ॥
दद्याच्छक्त्यातत्तोदानंपुण्याहेनविशुद्ध्यति ॥ एतत्सर्वंमिताक्षरायामाहुः ॥ अथरजस्वलायाश्चाण्डालादिस्पर्शेशुद्धिः । तत्रबृहस्प
तिः । पतितांत्यश्वपाकेनसंस्पृष्टास्त्रीरजस्वला ॥ प्रथमेन्हित्रिरात्रंतुद्वितीयेद्व्यहमेवच ॥ अहोरात्रंतृतीयेन्हिचतुर्थेनक्तमेवच ॥
अंत्यश्चांडालः । श्वपाकस्तद्विशेषःटांकइतिप्रसिद्धइतिरत्नाकरः। त्रिरात्रमुपवासंकुर्यादितिवाक्यशेषः । मनुः । रजस्वलातुसंस्पृष्टा
शुनाजंबूकवायसैः ॥ निराहाराभवेत्तावद्यावत्कालेनशुद्ध्यति ॥ अत्रचसर्वत्रउपवासांतेपंचगव्यपानमपिकर्त्तव्यमिति भवदेवः ।एवंन
टचर्मकाररजकादिस्पर्शेप्युपवासःपंचगव्यंचेत्यूहनीयमिति । सएवउपवासासामर्थ्येगिराः । चांडालःश्वपचोवापियद्यात्रेयींस्त्रियंस्पृशे
त् ॥ अफालकृष्टैर्वर्तेतपंचगव्येनशुद्ध्यति ॥ श्वपचः टांकइतिप्रसिद्धः।आत्रेयींरजस्वलामित्यर्थः ।अफालकृष्टैः हलकृष्टभूम्यनुत्पन्नैः
फलमूलादिभिः।अथान्यापिरजस्वलास्पर्शेशुद्धिः। तत्रकाश्यपः। रजस्वलातुसंस्पृष्टाब्राह्मण्याब्राह्मणीतुया॥ एकरात्रंनिराहारापंचगव्ये
नशुध्यति ॥ रजस्वलातुसंस्पृष्टाराजन्याब्राह्मणीचया ॥ त्रिरात्रेणविशुद्धिः स्याद्व्याघ्रस्यवचनंयथा ॥ राजन्याराजन्ययेत्यर्थः ।रजस्व
लातुसंस्पृष्टावैश्ययाब्राह्मणीतुया । पंचरात्रंनिराहारापंचगव्येनशुद्ध्यति ॥ रजस्वलातुसंस्पृष्टाशूद्रयाब्राह्मणीतुया ॥ षड्रात्रेणवि

शुद्धिः स्याद्ब्राह्मण्याः कामचारतः ॥ अज्ञानतश्चरेदर्धंब्राह्मणीसर्वस्पर्शने ॥ अत्रयथारजस्वलायाब्राह्मण्यारजस्वलाब्राह्मणीस्पर्शेउ
पवासः पंचगव्यंच तथा क्षत्रियावैश्याशूद्राणांरजस्वलानांवास्वजातीयरजस्वलास्पर्शेउपवासः पंचगव्यंच । यथाब्राह्मण्याक्षत्रिया
स्पर्शेत्रिरात्रमेवंक्षत्रियायावैश्यास्पर्शेवैश्यायाश्चशूद्रास्पर्शेत्रिरात्रमेव । तदुक्तं । रजस्वलायदानारी अन्योन्यमुपसंस्पृशेत् ॥ सवर्णे
पंचगव्येनत्रिरात्रमसवर्णके ॥ पंचगव्येनउपवाससहितेनइत्यर्थः । हीनवर्णायास्तूत्तमवर्णरजस्वलास्पर्शेस्नानमात्रम् । तथाचबृहस्प
तिः । अधिकवर्णांरजस्वलांस्पृष्ट्वास्नात्वाश्नीयादिति । एवंचक्षत्रियान्यारजस्वलायाः शूद्रास्पर्शेपंचरात्रमित्यूहनीयं । सर्वत्रचोपवा
सासामर्थ्येअफालकृष्टनीवारादिप्रवर्त्तनं । यत्तुमार्कण्डेयेनोक्तं । उदक्यातुसवर्णांस्त्रीस्पृष्टाचेत्स्यादुदक्यया ॥ तस्मिन्नेवाहनिस्नाता
शुद्धिमाप्नोत्यसंशयं ॥ तत्स्नानात्पूर्वंचतुर्थदिनस्पर्शविषयं । यदितूच्छिष्टारजस्वलाउच्छिष्टरजस्वलयास्पृश्यते तत्राङ्गिराः ॥
उच्छिष्टोच्छिष्टसंस्पृष्टाकदाचित्स्त्रीरजस्वला ॥ पूर्वांकृच्छ्रंप्रकुर्वीतशूद्रादानोपवासतः ॥ अत्रपूर्वाशब्दस्त्रैवर्णिकस्त्रियमाह । तेनाय
मर्थः । ब्राह्मण्यादीनामुच्छिष्टानांरजस्वलानामुच्छिष्टसजातीयरजस्वलास्पर्शेकृच्छ्रंप्राजापत्यं। शूद्रातुरजस्वलाउच्छिष्टातथाविधशूद्र
यास्पृष्टाउपवासंकृत्वाब्राह्मणायकिंचिद्दत्वाशुद्ध्यति।एवंचब्राह्मण्यास्तथाविधायास्तथाविधक्षत्रियास्पर्शेप्राजापत्यद्वयं।वैश्यास्पर्शेप्रा
जापत्यत्रयम्।शूद्रास्पर्शेप्राजापत्यचतुष्टयं।एवंक्षत्रियायाः वैश्यास्पर्शेप्राजापत्यद्वयं।शूद्रास्पर्शेक्षत्रियायाः प्राजापत्यत्रयं।शूद्रास्पर्शेप्रा
जापत्यचतुष्टयंवैश्यायाः शूद्रास्पर्शेप्राजापत्यद्वयमित्यूहनीयं।सर्वंचैतत्कामतःस्पर्शेअकामतस्तदर्द्धं।यदितूच्छिष्टारजस्वलारजकादि
नास्पृश्यतेतदात्रिरात्रं।यदिपुनस्तैरुच्छिष्टैःस्पृश्यतेतदाप्राजापत्यं॥ यदाश्वशृगालकुक्कुटादिभिरपियद्युच्छिष्टारजस्वलास्पृश्यतेतदाप्रा

जापत्यमित्यूहनीयं। कृच्छ्रप्राजापत्यंचदिनत्रयं।दिवाएकवारभोजनंदिनत्रयरात्रावेकवारभोजनं।दिनत्रयमयाचितान्नभोजनंदिनत्रयंचो
पवासःएवंद्वादशदिनसाध्यंव्रतमेतत् । तथाचमनुः । त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितं । त्र्यहंपरंचनाश्नीयात्प्राजापत्यविधिःस्मृ
तः॥ एकाधेनुश्चात्रदेयेतिभवदेवः॥ इतिरजस्वलाशुद्धिः॥ अथोच्छिष्टस्पर्शेशुद्धिः। तत्रबौधायनः। चांडालैःपतितैःस्पृष्टोविण्मूत्रेतु
कृतेद्विज । त्रिरात्रं तुव्रतंकुर्याद्भुक्त्वोच्छिष्टःषडाचरेत् ॥ इदंकामतःस्पर्शविषयं। तत्रषडुपवासेएकाधेनुःत्रिरात्रव्रतंत्रिरात्रोपवासमि
त्यर्थः। हारीतः। अनुच्छिष्टेतुसंस्पृष्टेस्नानंयेनविधीयते।उच्छिष्टस्तेनसंस्पृष्टःप्राजापत्यंसमाचरेत् ॥ प्राजापत्यंद्वादशाहसाध्यंपूर्वप्रकर
णशेषकथितं। एतच्चकामतोभुक्त्वोच्छिष्टाभ्यासविषयं। अंगिराः। भुक्त्वोच्छिष्टस्त्वनाचांतश्चांडालैःश्वपचेनवा॥ प्रमादात्स्पर्शनंग
च्छेत्तस्यकुर्याद्विशोधनं। गायत्र्यष्टसहस्राणिद्रुपदांवाशतंजपेत्। त्रिरात्रोपोषितोभूत्वापंचगव्येनशुद्ध्यति। श्वपचःटांकइतिप्रसिद्धः।
इदमकामतोभुक्त्वोच्छिष्टविषयं । आपस्तंबः। चांडालेनतुसंस्पृष्टोविशौचस्तुद्विजोत्तमः । उपोष्यरजनीमेकांपंचगव्येनशुध्यति।
इदमकामतोऽधउच्छिष्टविषयं। सर्वंचेदंरजस्वलास्पर्शेकुक्कुटादिभिश्चनाभेरूर्ध्वस्पर्शेसमानंविज्ञेयं। नाभेरधःकुक्कुटादिभिःस्पर्शेउच्छि
ष्टस्यस्नानमात्रम् । तथाचकुक्कुटादीनुपक्रम्याङ्गिराः।ऊर्ध्वंनाभेःकरौमुक्त्वायदंगमुपहन्यते। तत्रस्नानमधस्तात्तुक्षालनेनैवतच्छुचि ।
अत्रानुच्छिष्टस्यनाभ्यधःकुक्कुटादिस्पर्शेआचमनविधानादुच्छिष्टस्यस्नानमेवायाति । उच्छिष्टमदिरास्पर्शे वृद्धमनुः । जान्वधः
स्नानमात्रंस्यादानाभेरेकरात्रकं। नाभेरूर्ध्वंत्रिरात्रंस्यान्मदिरास्पर्शनेविधिः। हारीतः। उच्छिष्टस्तुस्पृशेद्विप्रश्चांडालान्नंकथंचन ।
ऊर्द्ध्वोच्छिष्टस्तुसंस्पृष्टोद्विजःसांतपनंचरेत् ॥ अधोच्छिष्टोयदातुस्यात्प्रायश्चित्तंभवेदिदं। त्रिरात्रमुपवासः स्यात्पंचगव्येनशुद्ध्यति।

सांतपनंतुप्रथमदिनेपंचगव्यमात्रपानं द्वितीयदिनेउपवासः । तथा । याज्ञवल्क्यः । कुशोदकंतुगोक्षीरंदधिमूत्रंशकृद्‌घृतम्॥प्राश्याऽपरे द्युरुपवसेत्कृच्छ्रंसांतपनंचरन् ॥ अंगिराः । चांडालोदकसंस्पर्शेस्नानमेवसमाचरेत् । उच्छिष्टेनतुसंस्पृष्टस्त्रिरात्रेणविशुध्यति ॥ चांडालादिस्पर्शेअकृतस्नानस्यभोजनादावापस्तम्बः । संसर्गन्तुयदागच्छेच्छवोदक्यांत्यजैःसह । एतैरेवयदास्पृष्टःप्रायश्चित्तंकथं भवेत् ॥ भोजनेतुत्रिरात्रंस्यात्पानेतुद्व्यहमेवहि । मैथुनेपादकृच्छ्रःस्यात्तथामूत्रपुरीषयोः ॥ दिनमेकंतथामूत्रेपुरीषेतुदिनद्वय म् ॥ एकाहस्तत्रनिर्दिष्टोदंतधावनभक्षणे ॥ पादकृच्छ्रःचतुर्दिनसाध्यः । तत्रप्रथमदिनएकभुक्तंततोनक्तभोजनंततोऽयाचितभो जनं ततउपवासः । तथाचयाज्ञवल्क्यः । एकभक्तेननक्तेनतथैवायाचितेनच । उपवासेनचैकेनपादकृच्छ्रःप्रकीर्त्तितः ॥ अत्यंताभ्या सेविशेषमाहापस्तंबः । चांडालंचैवसंस्पृश्ययश्चाश्नीयात्तुकामतः । द्विजश्चांद्रायणंकुर्यात्प्राजापत्यमथापिवा ॥ प्राजापत्यंरजस्व लाशुद्धिप्रकरणेकथितं।चांद्रायणमाह वसिष्ठः। एकैकंवर्द्धयेत्पिंडंशुक्लेकृष्णेचह्रासयेत् । अमावास्यांनभुंजीतएषचांद्रायणःस्मृतः ॥ पिंडश्चमयूरांडप्रमाणः ॥ अमावास्याममावास्यायामित्यर्थः । तैलाद्यभक्तस्यचांडालादिस्पर्शे । आपस्तम्बः । येनकेनचिद भ्यक्तश्चांडालंपतितंस्पृशेत् । उपवासेनचैकेनपंचगव्येनशुद्ध्यति ॥ तथा । चर्मकारंचरजकंधीवरंनटमेवच । एतान्स्पृष्ट्वाद्विजोमो हादाचामेत्प्रयतोपिसन् ॥ एतैःस्पृष्टोद्विजोच्छिष्टएकरात्रंपयःपिबेत् । तैरुच्छिष्टैस्त्रिरात्रंस्याद्‌घृतंप्राश्यविशुद्ध्यति । पयोत्रजलं । सर्वत्रचात्रउभयोरप्युच्छिष्टयोःस्पर्शेद्विगुणंद्रष्टव्यं । तथाचबृहस्पतिः । उच्छिष्टोच्छिन्नसंस्पर्शः कदाचिदुपजायते । वर्णानांतुस जातीनामुपस्पृश्यततःशुचिः ॥ उच्छिष्टस्यउच्छिष्टसंस्पर्शइत्यर्थः ॥ इदंचाकामतः स्पर्शविषयं । कदाचिदितिवचनात् । कामतः

स्पर्शे आपस्तम्बः॥विप्रो विप्रेणसंस्पृष्टउच्छिष्टेनकदाचन ।स्नायात्तेनविशुद्धिःस्यादापस्तंबोब्रवीदिदं॥क्षत्रियेणयदास्पृष्टउच्छिष्टस्तु
कथंचन ॥ स्नानंजपस्तुत्रैकाल्यंदिनस्यान्तेघृतंपिबेत् ॥ एवमेववैश्यस्पर्शेसर्वत्रद्वयोरपि उच्छिष्टत्वंज्ञेयम् । तथा । उच्छिष्टोच्छि
ष्टसंस्पृष्टः शुनाशूद्रेणवैद्विजः । उपोष्यरजनीमेकांपंचगव्येनशुद्धयति ॥ उच्छिष्टेनशूद्रेण उच्छिष्टस्पर्शइत्यर्थः । तथा । तै
लाभ्यक्तस्त्वनाचान्तः श्मश्रुकर्मणिमैथुने । मूत्रोच्चारंयदाकुर्यादहोरात्रेणशुद्धयति । उच्छिष्टस्यश्वकाकादिविष्ठास्पर्शेस्नानशुद्धि
प्रकरणे एव शुद्धिरुक्ता । चांडालादिस्पर्शे अकृतस्नानशयनेदोषमाह यमः। चांडालैः श्वपचैः स्पृष्टोनिशिस्नानं समाचरे
त् । नवसेत्सदनंरात्रौसद्यः स्नानेनशुद्धयति ॥ अथ तत्रवसेद्रात्राववज्ञानादविचक्षणः । तदातस्यतुतत्पापंशतधापरिवर्त्तते । अ
थस्वभावशुद्धाः । तत्रमनुः । नित्यंशुद्धः कारुहस्तः पण्यंयच्चप्रसारितं । ब्रह्मचारिगतंभैक्ष्यंनित्यंमेध्यमितिस्थितिः ॥ नित्य
शुद्धः अमेध्यानुपहतः प्रक्षालनव्यतिरेकेणैवस्वव्यवहारोचितइत्यर्थः । कारुःशिल्पी पण्यं विक्रय्यंक्रयदेशेप्रसारितं यच्चासिद्धा
न्नव्यतिरिक्तंविवक्षितं । मनुविष्णू । नित्यमास्यं शुचिस्त्रीणांशकुनिः फलपातने । प्रस्रवेचशुचिर्वत्सःश्वामृगग्रहणेशुचिः । वसिष्ठः ।
वत्सः प्रस्रवनेमेध्यःशकुनिःफलपातने।स्त्रियश्च रतिसंसर्गेश्वामृगग्रहणेशुचिः ॥ स्त्रीमुखमुच्छिष्टाद्यनुपहतं प्रस्रवनेदोहानुकूलस्तनपाने
फलपातनेमुखेनवृंतात्फलविभाजने । स्त्रियश्चस्वभार्याएव । मनुः । श्वनिर्हतस्ययन्मांसंशुचितन्मनुरब्रवीत् । क्रव्याद्भिश्चहतस्यान्यै
श्चांडालाद्यैश्चदस्युभिः । मांसंशुचि भक्ष्यतयैवयत्प्रकाल्पितंतदेव क्रव्याद्भिर्व्याघ्रादिभिः । यमः । बालकैर्यत्परिक्रांतं
स्त्रीभिराचारितंचयत् । मशकैर्मक्षिकाभिश्चनिलीनंनोपहन्यते ॥ निलीनमाक्रांतम् । अदोषंतुमुखं स्त्रीणांगवांपृष्ठमजामुखम् ॥ एता

निनित्यंशुद्धानियच्चवाचाप्रशस्यते ॥ आत्मशय्यासनंवस्त्रंमेध्यंबालमदूषकं । ब्रह्मचारिगतंभैक्ष्यं नित्यं मेध्यमितिस्थितिः ॥ स्त्रीमुखंरतिसमयेशुचि। स्त्रीमुखं रतिचुंबनइति पैठीनसिवाक्यात् । आसनं शयनं पानं स्त्रीमुखंकुतुपंक्षुरं । नदूषयंति विद्वांसोयज्ञेषुचमसंतथा। कुतुपोनेपालकंबलःक्षुरामितरमुंडव्यापृतमपि। गौरश्वोविप्रुषश्छायामक्षिकाःशलभाः शुकाः । अजो हस्तीरणेछन्नंरश्मयश्चेन्दुसूर्ययोः ॥ शुचिरग्निरजोवायुरापोदधिघृतंपयः । सर्वाण्येतानिशुद्धानिस्पर्शेमेध्यानिनित्यशः ॥ यस्मादे तानिशुद्धानितस्मादशुचिस्पर्शेमेध्यानिछायातुचांडालादन्यस्यमेध्या। तथाचब्रह्मपुराणे। चांडालपतितच्छायास्पर्शेदुष्टातनुर्भवेत्। सुमंतुः । घृतघटफलागाराणामभोज्यान्नानामदोषः । अभोज्यान्नानामपिघृतघटादयोनदुष्टाइत्यर्थः । बौधायनः । अदुष्टासंतताधा रावातोद्धूताश्चरेणवः । आकराःशुचयःसर्वेवर्जयित्वासुराकरं ॥ शातातपः। रेणवःशुचयःसर्वेवायुनासमुदीरिताः । अन्यत्ररास भाजाविश्वसमूहनिवासस्तां॥समूहनिर्मार्जनी।देवलः। गोशकृच्छुद्धदेशस्थंश्मशानादुद्धृतंशिवम्। अग्राम्यामृद्भवेच्छुद्धाशुक्रविण्मूत्रव र्जिता ॥ गोमयंशुद्धदेशस्थंश्मशानादुद्धृतंशुचि। तेनश्मशानस्थितंनशुचि । तेनश्मशानस्थितंयावद्भवतितावदेवाशुचीत्यर्थः। यमः। पृष्ठतोगौर्गजःस्कन्धेसर्वतोश्वःशुचिस्तथा। नृणांमूत्रपुरीषेच अमेध्येमलमेवच । गोपुरीषंचमूत्रंचनित्यंमेध्यमितिस्थितिः ॥ शंखः ॥ शुद्धंनदीगतंतोयंसर्वएवतथाकराः ॥ मुखवर्ज्यांचगौःशुद्धामार्जारःक्रमणेशुचिः। देवलः । अकश्मलैःसमिद्धोग्निर्दुर्मनुष्यै रदूषितः। सर्वेषामप्यशौचानांसमर्थःशोधनायसः ॥ कश्मलेनरैःसमिद्धःप्रज्वालितः। कश्मलंचदेवलेनपरिभाषितं। मानुषास्थिशवो मज्जारेतोविण्मूत्रमेवच। कुणपंपूयमेतच्चकश्मलं समुदाहृतामिति॥ दुर्मनुष्यैश्चांडालादिभिः। अदूषितःदूषितत्वंचस्पर्शग्रहणाभ्याम्।

अग्नेर्वृषलभुक्तस्यग्रहणंनास्त्यनापदि । श्वपाकोवृषलोभोक्तुंब्राह्मणाग्निंचनार्हतः । चांडालाग्नेरमेध्याग्नेःसूतिकाग्नेश्चकर्हिचित् ।
पतिताग्नेश्चिताग्नेश्चनाशिष्टैर्ग्रहणंस्मृतं । बृहस्पतिः । पादौशुचीब्राह्मणानामजाश्वानांमुखंशुचि । गवांपृष्ठानिमेध्यानिसर्वं
गात्राणियोषिताम् ॥ अश्वावडवाअश्वःसर्वत्रमेध्यःपूर्वमुक्तः । याज्ञवल्क्यः । नस्त्रीदुष्यतिजारेणनाग्निर्दहनकर्मणा । नापो
मूत्रपुरीषाभ्यांनद्विजोवेदकर्मणा । नस्त्रीत्यादेरर्थोग्नेव्यवस्थाप्यः । नापइत्यपिजलाशयस्थितानामपांदूषणाभावमाह । जलाश
योपिकूपव्यतिरिक्तः । नद्विजोवेदकर्मणाप्रतिग्रहेणेत्यर्थः । मनुः । ऊर्ध्वंनाभेर्यानिखानितानिमेध्यानिसर्वशः । यान्यधःस्थान्यमे
ध्यानिदेहाच्चैवमलाश्च्युताः । खानिछिद्राणिमेध्यानिस्पृश्यानि । अमेध्यानि अस्पृश्यानि देहाच्च्युतामलानखादयो अमेध्याअस्पृ
श्याइत्यर्थः । यमः । दिवासूर्यांशुसंतप्तंरात्रौनक्षत्रमारुतैः । संध्ययोरप्युभाभ्यांचपवित्रंसर्वदाजलं॥ व्यासः ।अच्छिन्नाग्रंतुयद्वस्त्रंमृदाप्र
क्षालितंचयत् । अहतंधातुरक्तंचतत्पवित्रमितिस्थितिः ॥ अनुक्तशुद्ध्यंतरे मनुः । त्रीणिदेवाःपवित्राणिब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तंयच्चवाचाप्रशस्यते ॥ अदृष्टमपवित्रतयास्वयमज्ञातंनिर्णिक्तंप्रक्षालितं । ब्राह्मणानामितिचातुर्वर्ण्योपलक्षणं ।
यमः । बलात्कारोपभुक्तायाचौरहस्तगतापिवा । स्वयंविप्रतिपन्नावाअथवाविप्रमादिता ॥ अत्यंतदूषितापिस्त्रीनपरित्यागमर्हति । सर्वे
षांनिष्कृतिःप्रोक्तानारीणांतुविशेषतः ॥ एतत्समानविषयमेव नस्त्रीदुष्यतिजारेणेतिवाक्यं । निष्कृतिः प्रायश्चित्तं । प्रायश्चित्तमेवद
र्शयति । स्त्रियःपवित्रमतुलंनैतादुष्यंतिकर्हिचित् । मासिमासिरजस्तासांदुष्कृतान्यपकर्षति । सोमःशौचंददौतासांगंधर्वाश्चशुभांगिरं ।
पावकः सर्वमेध्यत्वंनित्यंमेध्याहियोषितः ॥ याज्ञवल्क्यः । व्यभिचारादृतौशुद्धिर्गर्भेत्यागोविधीयते । भर्तृगर्भवधेतासांतथामहतिपा

तके । अस्यार्थः । स्त्रीणामृतौप्रवृत्तेसातिपूर्वंकृताद्व्यभिचाराच्छुद्धिर्भवति । व्यभिचारेणयदिगर्भोवृत्तस्तदाऽस्याःस्त्रियः त्यागएव विधेयः । भर्तृवधेगर्भवधेमहापातकेचतस्यास्त्यागः । तथा । स्वच्छंदगाहियानारीतस्यास्त्यागोविधीयते । नचैवस्त्रीवधंकुर्यान्नचै वांगविकर्त्तनम् ॥ वसिष्ठः ॥ चतस्रस्तुपरित्याज्याः शिष्यगागुरुगाचया ॥ पतिघ्नीचविशेषेणजुंगितोपगताचया ॥ जुंगितो निंदितः शूद्रादिः । हारीतः । गर्भघ्नीमधोवर्णगांशिष्यसुतगामिनीं पापव्यसनासक्तांधनधान्यक्षयकरांवर्जयेद्व्यभिचारिणीं । अधोवर्णोअपकृष्टवर्णः शूद्रः ॥ शंखलिखितौ ॥ एकव्रतस्कन्नभावात्परोपहतत्वाच्चदुष्टाः कुलसंकरकारिण्योभवंति । एकव्र तस्कन्नभावात्एकव्रतं पतिव्रतंतत्त्वादित्यर्थः । तथा । चांद्रायणंचतासांपावनमित्याचार्य्याःप्राजापत्यंवा । तदि यमत्रव्यवस्था।स्त्रीणांमदमोहबलात्कारादिप्रमादजातेव्यभिचारेयाज्ञवल्क्यवाक्यादार्त्तवेनशुद्धिः । कामकृतेव्यभिचारेशंखलिखित वाक्यात्प्रायश्चित्तेनशुद्धिः ॥ गुरुशिष्यसुतपतितानांचगमनेऽन्यतोगर्भसंभवेगर्भपातेनभर्तृवधेब्रह्महत्यादिमहापताकेचममवाक्या त्त्यागः । यत्तुबलात्कारादिव्यभिचारेपित्रिरात्रंप्रायश्चित्तंस्मर्यते तदसंजातरजस्कायानिवृत्तरजस्कायाश्चद्रष्टव्यम् ।एवंचसतियत्रदेशे व्यभिचारिणीनांब्राह्मणीनांनप्रायश्चित्तमुपदिश्यतेनचकृतेप्रायश्चित्तेपरिग्रहोतिप्रसंगभयेनक्रियतइतिसमाचारस्तत्रतथैदव्यवहर्त्तव्यं । तथाचमरीचिः । येषुस्थानेषुयच्छौचंधर्माचारस्तुयादृशः । तत्रतन्नावमन्येतधर्मस्तत्रैवतादृशः॥येषुदेशेषुयेदेवायेषुदेशेषुये द्विजाः। येषुस्थानेषुयत्तोयंयाचयत्रैवमृत्तिका॥ इतिशुद्धिविवेकेतृतीयःपरिच्छेदः॥ ॥शुद्धौसप्तनिबन्धान्दृष्ट्वानुमतः पितुस्तथाभ्रातुः। रुद्रधरेणकृतोयंशुद्धिविवेकः सतांप्रीत्ये । सामान्यतोत्रवर्णानांशुद्धिर्मरणजन्मनोः । प्रागथाशौचनियमास्ततस्तेषांविशेषतः॥शुद्धि

रुक्तात्ततोशौचसंकरेशुद्धिरीरिता ॥ विदेशस्थार्भकस्त्रीणांमरणेगर्भसंस्रवे । शुद्धिर्मृत्युविशेषेचसासापिंडेष्वनंतरम् ॥ निर्हारादा
वथाशुद्धिरशुद्धिरहितास्तथा । अधिकारिविवेकोथानधिकारिनिरूपणं ॥ जलार्घानर्हकथनंपुत्राणांलक्षणंतथा । सपिंडानामिहततो
लक्षणंपरिकीर्त्तितं॥देहशुद्धिःक्षालनादिशुद्धिरत्राथकीर्त्तिता।स्नानशुद्धिस्तैजसादिद्रव्यशुद्धिरनंतरं। पक्वान्नशुद्धिर्भूशुद्धिःशुद्धिरन्नोदक
स्यच ॥ ततोरजस्वलाशुद्धिरुच्छिष्टस्पर्शनेतथा ॥ स्वभावशुद्धिश्चतथा क्रमेणात्रप्रकीर्तिता ॥ ८ ॥ इतिमहामहोपाध्यायलक्ष्मीधरा
त्मजमहामहोपाध्यायश्रीहलधरानुजतमश्रीरुद्रधरकृतःशुद्धिविवेकः समाप्तः ॥ श्रीः ॥ शुभम् ॥

इदं शुद्धिविवेकाख्यं पुस्तकं श्रीकृष्णदासात्मजेन खेमराज श्रेष्ठिना मुंबय्यां स्वकीये
"श्रीवेङ्कटेश्वर" मुद्रालये मुद्रयित्वा प्रकाशितम् । संवद् १९५१ । शके १८१६

पुस्तक मिलनेका ठिकाना–खेमराज श्रीकृष्णदास "श्रीवेंकटेश्वर" छापाखाना–मुंबई.

## पद्मपुराण समग्र सातों खण्ड।

श्रीमद्वेदव्यास प्रणीत ५५००० हजार ग्रंथ बडी कठिनतासे अनेक राजा महाराजाओंकी पुस्तकोंके द्वारा शास्त्रियोंसे शुद्धकराके स्वच्छतापूर्वक ग्रन्थाकार छापकर तयार किया है मूल्य केवल १८ रु० है।

## पंचदशी भाषाटीका सहित।

महाशयो! वेदान्तका ऐसा कठिन ग्रंथ होनेपरभी ऐसा सुगम भाषार्थ किया गया है जो सर्वको लाभदायक है सुन्दर जिल्दबँधी है कीमत केवल ४ रु० है।

## हठयोगप्रदीपिका भाषाटीका सहित।

देखो! हठयोग योगशास्त्र मुमुक्षुओंके लाभार्थ सरल हिन्दी भाषामें भाषानुवाद कराय स्वच्छतापूर्वक छापा है सुन्दर जिल्दबंधी है मूल्य केवल १॥ रु० है।

## पातंजलि—योगदर्शन तथा सांख्यदर्शन भाषानुवाद सहित।

देखो! इसपातंजलि सूत्र मात्रका ऐसा बहुत और रुचिर भाषानुवाद किया गया है कि पढ़ते २ ग्रंथका आशय चित्तमें चुभ जाता है। मूल्य केवल योगदर्शनका १रु० और सांख्यदर्शनका १॥ रु० है।

**श्रीमद्वाल्मीकी रामायण भाषाटीका की० २२ रु०**

**श्रीमद्भागवत भाषाटीका की० १२ रु०**

पुस्तक मिलनेका ठिकाना—

**खेमराज श्रीकृष्णदास.**

**“श्रीवेङ्कटेश्वर” छापाखाना मुम्बई.**

